॥ श्रीः ॥

# वैद्यविनोदसंहिता ।

( प्राचीनचिकित्साग्रन्थः

गौडवंशोद्भवानन्तभट्टात्मज–

पंडित शङ्करशर्मभट्टविरचिता ।

मिषग्वरगदाधरत्रिपाठिकृत–

## भाषाटिप्पणीभिर्विभूषिता च ।

सा च

-श्रीकृष्ण-

र्पितः, तेन च

क्षेमराज–श्रीकृष्णदासश्रेष्ठि

मुद्रणयन्त्रालये

गकरणादिना

मुम्बय्यां

मभ्यर्थ्यते–

( खेतवाडी ७ वीं गली खम्बाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) ...

# विज्ञप्तिः ।

सुविदितमेवैतन्निखिलमहानुभावानां, यत्किल धर्मार्थकाममोक्षरूप-पुरुषार्थचतुष्टयस्य मुख्यं साधनं शरीरारोग्यमेव, रोगग्रस्तस्य च जप-तपो-नियमादिसाधनाऽसामर्थ्यादकिञ्चित्करत्वं सुप्रथितमिति । अत एव परमकारुणिकेन परमात्मना तत्तद्देव-महर्षिरूपेणाऽऽयुर्वेदस्य प्रकाशो विस्तरश्च कृतः । तत्र चिकित्साविषये शङ्करभट्टविरचितो "वैद्यविनोदसंहिता" नामकोऽयं ग्रन्थः परमोत्तमः, स च महता-परिश्रमेण सम्प्राप्तः संशोध्य संस्कृत्य हिन्दी ( सरयूपारी )-भाषाटिप्पणीभिः संभूष्य बस्तीमण्डलान्तर्गतबांशीराज्येश-श्रीमन्महाराजाधिराज ( शिरोनेति ) महेन्द्रसिंहात्मजरामसिंहराज्या-न्तर्गत ( तपाचमराख्य ) तिवारीपुरग्रामवास्तव्यश्रीरामात्मजसूर्य-मणित्रिपाठ्यग्रजेन मया समस्तमानवोपकाराय क्षेमराज–श्रीकृष्ण-दासश्रेष्ठिने पुनर्मुद्रणादिसर्वाधिकारसहितः सादरं समर्पितः, तेन च मुम्बय्यां स्वकीये "श्रीवेंकटेश्वर" ( स्टीम् ) मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितः । तदेतद्ग्रहणपठनपाठनौषधिप्रयोगकरणादिना सफलयन्तु मे परिश्रममनुग्राहका ग्राहकाः सद्वैद्या इति भृशमभ्यर्थयते–

गदाधरशर्मा वैद्यः ।

आवश्यक पत्र ।

## इसे अवश्य देखिये ।

इस ग्रंथमें ( १६ ) उल्लास अर्थात् अध्याय हैं और ग्रंथसंख्या १७४१ श्लोक हैं और ( ७१३ ) कठिन शब्दोंकी टिप्पणी नीचे बनादी हैं और प्रतिअध्यायोंपर कार्य दरशाया गयाहै ।

१५–कर्णरोग–नासा–प्रतिश्याय–नेत्रवाल–विषरोग नि० चि०

१६–वृष्य–रसायन–जलयोग–वमन–विरेचन–अनुलोमन आदिभेद क्वाथकल्पना–विलेपी–मंड—घृततैलविधान–वस्तिकर्म—नस्य-कर्म–धूमपान–गंडूष–परिमाषा–व्योष–त्रिफला–पंचमूलादिसंज्ञा रसवीर्य–विपाक–उत्क्लेद–लक्षण–युक्तायुक्तविचार इत्यादिनिर्मित किये हैं।

## आचार्य्यजीवनचरित्र।

श्लोकः।

श्रीगौडवंशोद्भवशास्त्रवेत्ता ह्यनन्तभट्टो सुखजाऽग्रगण्यः ॥
तस्यात्मजेनाथ सुशंकरेण ग्रंथः कृतो वैद्यविनोदनामा ॥१॥
तद्वैद्यकं शास्त्रमतीव दिव्यं गदाधराख्येण त्रिपाठिना ऽत्र।
नृभाषया टिप्पणिका व्यधायि विद्वज्जनानामवलोकनाय ॥२॥

## अथ टिप्पणीबनानेका संवत्।

श्लोकः।

शरे ५ पु ५ नन्दे९न्दु १ मिते ( १९५५ ) हि वैक्रमे वर्षे शुचौ शुक्लशरे ५ भृगोर्दिने ॥ टीका कृतेयं हि गदाधरेण–बाचा नृणां वैद्यविनोदग्रन्थे ॥ ३ ॥

## अथ दोषक्षमा।

श्लोकः।

यात्रच्युतिष्टिप्पणिके विनोदे यद्बालबुद्ध्या च मया व्यधायि ॥
महाशयैः श्रेष्ठजनैर्बुधैश्च सा क्षम्यतामर्भकवाग्विनोदात् ॥ १ ॥

## अथ ग्रंथरक्षा।

श्लोकः।

धर्मस्य रक्षा यशसश्च रक्षा देवस्य रक्षा मुनिभिः प्रदिष्टा ॥
सर्वस्य रक्षा नियतेरधीना स्वस्याप्यधीना च सुपुस्तकस्य ॥ १ ॥

## गदाधरत्रिपाठी वैद्यका स्थान ।

श्लोकः ।

अयोध्यायाः किलैशाने षट्योजनमानके ॥
आदिगवती नदी यत्र रामसिद्धाश्रमे शुभे ॥ १ ॥
राजाधिराजविख्याते पुरं वाशीतिनामकम् ।
ततस्तु पूर्वदिग्भागे क्रोशार्धप्रमिते शुभे ॥ २ ॥
तत्रास्ते द्विजवर्यवासमहितो ग्रामस्त्रिपाठीपुरम् ॥
विप्रास्तत्र दयालवः सुखकरा देव्याः सदा सेवकाः॥ ३ ॥
देव्याः पादरजःप्रभावपरास्तद्ग्रामभूस्वामिनः ॥
तेषां मुख्यतमो गदाधरसुधीः शुद्धः शिवस्य प्रियः ॥ १ ॥

---

१ [illegible]

# अथ वैद्यविनोदसंहिताविषयानुक्रमणिका ॥

उल्लासः १.

इति अनुक्रमणिका समाप्त ॥

॥ श्रीः ॥

# अथ वैद्यविनोदसंहिता

## प्रारभ्यते ।

### प्रथमोल्लासः ।

### अथ मंगलाचरणम्–

सकलसुखनिधानं भुक्तिमुक्तिप्रदं यज्जयति जगति सिद्धैस्सर्वदोपास्यमानम् ॥ करकलितवराब्जाऽभीतिखङ्गं प्रसन्नं दिशतु फलमभीष्टं श्यामधामाम्बिकायाः ॥ १ ॥

अनन्तनामा हि दिगन्तकीर्तिः श्रीगौडवंशः प्रथितप्रभावः ॥तदात्मजः शंकरनामधेयः शास्त्रेषु काव्येषु परं प्रवीणः ॥ २ ॥

राजाऽधिराजो जयसिंहवीरः ख्यातः पृथिव्यां महनीयकीर्तिः ॥ प्रतीपभूपालनिवारणेन प्रतापपुंजोज्ज्वलदग्निकल्पः ॥ ३ ॥

तदात्मजो रामसमानसारो नाम्ना चिरायुर्नृपरामसिंहः ॥ रूपेण दानेन पराक्रमेण तिरस्कृतानंगसुरद्रुमेन्द्रः ॥ ४ ॥

दानं यदीयं परिकल्पितं यद्दैव सेन्द्राः सुरपादपा-द्याः ॥ मानं परित्यज्य विमृश्य बुद्ध्या स्थितिः शुभा नेति दिवं प्रयाताः ॥ ५ ॥

क्षेमस्य योगस्य च मे विधातुस्तस्याज्ञया ग्रंथकृता-देरण ॥ ये ये प्रयोगा बहुशोऽनुभूतास्ते ते मया संलि-खिता विमृश्य ॥ ६ ॥

प्रणम्य मान्यान्विनिवेदयामि ग्रंथं मुदा पश्यत सावधानाः ॥ दृष्टे यदस्मिन्परमः प्रमोदो भवेत्तथा सिद्धिरपि प्रकृष्टा ॥ ७ ॥

हारीतपाराशरसुश्रुतानां संगृह्य सारं विधिवत्स-मासात् ॥सौख्याय रोगार्दितमानवानां विधीयते वैद्य-विनोद एषः ॥ ८ ॥

यथा विषं यथा वह्निर्यथा शास्त्रं यथा पविः॥ तथौ-षधमविज्ञातं मूढवैद्यप्रयोजितम् ॥ ९ ॥

सन्निदानपूर्वरूपरूपोपशयाप्तिभिर्गदं विद्यात्॥ प्रश्न-स्पर्शनदर्शैरेतै रुग्णं परीक्षेत ॥ १० ॥

रोगोत्पत्तौ तु हेतुर्यस्तन्निदानं प्रचक्षते ॥ अव्यक्त-लिंगं प्राग्रूपं रूपं तु व्यक्तलक्षणम् ॥ ११ ॥

शान्तिर्व्याधेरुपशयोऽन्यथानुपशयः स्मृतः ॥ उभाभ्यां संपरीक्षेत गूढलिंगमिदं भिषक् ॥ १२ ॥

व्याधेरागतिरात्तिः स्याद्दुष्टदोषेण सर्पता ॥ रोगज्ञानाय कर्त्तव्यं नाडीमूत्रपरीक्षणम् ॥ १३ ॥

वक्रा तीव्रा मदंगा वातपित्तश्लेष्मभ्यः स्यान्नाडिका हि क्रमेण ॥ वीणातंत्री सर्वरागप्रकाशा तद्वन्नाडी सर्वरोगप्रकाशा ॥ १४ ॥

## अथ नाडीपरीक्षा ।

शिथिलशिथिलमन्दं व्याकुलं व्याकुलं वा भवति च यदि नाडी याति सूक्ष्मा प्रणाशम् ॥ भवति सकलमेतल्लक्षणं यस्य नाड्यां व्रजति यमनिवासं सोऽचिरात्सन्निपाती ॥ १५ ॥

स्त्रीणां वामकरे नाडी पुरुषाणां च दक्षिणे ॥ परीक्षेत भिषक् सम्यग्धृत्वा धृत्वा विमुच्यते ॥ १६ ॥

नाडी वक्रगतिं याति सर्पवद्वेगवत्तरा ॥ मुखं विकसितं यस्य तस्य मृत्युर्न संशयः ॥ १७ ॥

क्षीणशुक्रस्य मन्दाग्नेर्नाडी मंदतरा भवेत्॥ द्विदोषलक्षणैरेतैर्मिश्रा ज्ञेया द्विदोषजा ॥ १८ ॥

शरीरं शीतलं यस्य नाडी चोष्णतरा भवेत् ॥ ज्वरमन्तर्गतं तस्य जानीयाद्भिषगुत्तमः ॥ १९ ॥

नाडी वेगवती चोष्णा ज्वरात्संजायते नृणाम् ॥ अतिसूक्ष्मातिवेगाढ्या शीता तु प्राणनाशिनी ॥२०॥

चपला स्यात्क्षुधार्तस्य तृप्तस्य वहति स्थिरा ॥ सुखिनस्तु स्थिरा ज्ञेया तथा बलवती मता ॥ २१ ॥

## अथ मूत्रपरीक्षा ।

प्रातः शुद्धे काचपात्रेऽथ कांस्ये मूत्रं क्षिप्त्वा तैलबिन्दुश्च तत्र ॥ बिंदुः स्तब्धो जायते कष्टसाध्यो मग्नश्चेद्वा छिद्रितो मृत्युकारी ॥ २२ ॥

नीलं सितं पीतमथो समीरादत्युष्णपीतं भवतीह पित्तात् ॥ मूत्रं सितं स्निग्धहिमं कफाच्च कृष्णोष्णरक्तं शबलं त्रिदोषात् ॥ २३ ॥

पद्मशंखमणिचामराकृतिस्तैलबिन्दुरतिसौख्यसूचकः ॥ कूर्मसिंहवृषवृश्चिकाऽहिभः कुक्कुटाकृतिरसौ मृतिप्रदः ॥ २४ ॥

मूत्रे विकारा यदि तैलबिन्दोर्भवन्त्यमी तस्य भवेद्विनाशः ॥ शूलं धनुर्वज्रकुठारखड्गाः दंडाभबाणाः क्षुरिकादिकाद्याः ॥ २५ ॥

## अथारिष्टलक्षणम् ।

निशायां जायते दाहो दिवा शीतं भवेद्यदि ॥ कंठश्लेष्मा प्रवृद्धश्चेन्मरणं तस्य निश्चितम् ॥ २६॥

नासा शीता च हृदयं पाणिपादौ च शीतलौ ॥ शिरःशूलं भवेद्यस्य तस्य मृत्युर्न संशयः ॥ २७ ॥

कांतिप्रतापलज्जाभिर्हीनो यः क्रोधभाषकः ॥ षड्भिर्मासैर्न सन्देहः स याति यमसादनम् ॥ २८ ॥

अंगे कंपो गतेर्भंगो वर्णस्य परिवर्तनम् ॥ गन्धस्वादौन जानाति यः सोऽपि मरणं व्रजेत् ॥ २९ ॥

मूले वृक्षस्य शाखायां स्फुलिंगा वह्निसम्भवाः ॥ दृश्यन्ते येन तस्य स्यान्मरणं मासषट्कतः ॥ ३० ॥

उदयः सूर्यमार्गेण चंद्रेणास्तमनं भवेत् ॥ शुभं तदा हि ज्ञातव्यं विपरीतं तु विघ्नदम् ॥ ३१ ॥

कामहीनः स्वेदहीनस्त्रिमासान्नश्यति ध्रुवम् ॥ न दृश्यते स्वरो वामो दक्षिणश्च सदा वहेत् ॥ ३२ ॥

पक्षेण मरणं तस्य यदि वा मासतो भवेत् ॥ भरणी च मघाश्लेषा तथाऽऽर्द्रा शततारका ॥ नक्षत्रेष्वेषु रोगश्चेन्मरणाय विनिर्दिशेत् ॥ ३३ ॥

## अथादौ ज्वरनिदानं व्याख्यास्यामः ।

आदौ रोगं परीक्षेत भिषक्कुर्यात्ततः क्रियाम् ॥ सर्वेषामेव रोगाणां दोषाः कुद्धा हि कारणम् ॥ ३४ ॥

दोषास्त्रयः पवनपित्तकफाः समासाद्दुष्टास्त एव विविधाऽऽमयदा भवन्ति ॥ तेषां प्रकोपकरणे किल रूक्षमुष्णं स्निग्धं क्रमेण विविधाहितसेवनं च ॥ ३५ ॥

## अथ ज्वरलक्षणम् ।

अथ वक्ष्ये ज्वरादीनां सलक्षणचिकित्सितम् ॥ ज्वरो राजा हि रोगाणामतः प्रथममुच्यते ॥ ३६ ॥

दक्षापमानपरिकोपितवामदेवश्वासोद्भवो ज्वर इति प्रथितं पुराणे ॥ आगंतुकः सकलयुग्मपृथग्विभेदैर्वातादिभिर्भवति सोऽष्टविधो नराणाम् ॥ ३७ ॥

मिथ्याऽऽहारविहारतः प्रकुपिता दोषा रसस्यानुगाः कोष्ठाग्निं ज्वरदा निरस्य बहिरित्यामाशये संस्थिताः ॥ तापोंऽगग्रहणं क्रमो हि युगपत्संदिश्यते स ज्वरो वैरस्यं नयनप्लवः श्रमरुजः पूर्वं हि तस्योद्गमे ॥ ३८ ॥

आसप्तरात्रं तरुणो ज्वरः स्यात्क्काथो न देयो न हि तत्र रेचनः ॥ अत्याकुलत्वं प्रगताः कषायैर्दोषा विजेतुं सुतरामशक्याः ॥ ३९ ॥

वातोद्भवः सप्तरात्राद्दशरात्राच्च पैत्तिकः॥ श्लेष्मिको द्वादशाहेन ज्वरः पाकं प्रयाति हि ॥ ४० ॥

## आगन्तुकज्वरः ।

विषाऽतिकामक्षतशोकभूतभयाऽभिशापादिभिरौषधीनाम् ॥ गन्धैर्ज्वरा ये प्रभवन्ति नृणामागन्तुकास्ते मुनिभिः प्रदिष्टाः ॥ ४१ ॥

श्यामास्यतावान्तिमदातिमोहास्तृष्णाऽतिसारो विषजे ज्वरे स्युः ॥ आलस्यचित्तभ्रममोहतन्द्राऽरुचिक्लमाः कामभवे भवन्ति ॥ ४२ ॥

उद्विग्नतारोदनकंपनानि भूतोद्भवे शोकभयाच्च वायुः ॥ क्रोधाच्च पित्तं हि मलास्त्रयोपि यथास्वमेतान्परिभावयेन्ना ॥ ४३ ॥

## ज्वरोपचारः ।

अहिमं सलिलं सुलंघनं निलयं वातनिवर्तनोचितम् ॥ वसनं गुरु सूक्ष्मपेशलं ज्वरितानां प्रथमं प्रशस्यते ॥ ४४ ॥

## अथ सर्वनवज्वरे पाचनौषधम् ।

शुण्ठी सकुस्तुंबुरुदेवदारुव्याघ्रीद्वयानां विहितः कषायः ॥ पूर्वं प्रदेयो ज्वरिताय नूनं ज्वरापहो दीपनपाचनः स्यात् ॥ ४५ ॥

## अथ वातज्वरलक्षणम् ।

जृम्भांगमर्दौ विरसाऽस्यता रुग्घृन्मूर्द्धगात्रेषु शकृद्विबन्धः॥ कण्ठौष्ठशोषौ विषमो हि वेगो रौक्ष्यप्रकम्पोऽनिलजे ज्वरे स्यात् ॥ ४६ ॥

## तस्यौषधम् ।

भूनिम्बमुस्ताजलकण्टकारीद्वयाऽमृतागोक्षुरनाग-

राणाम् ॥ सशालपर्णीद्वयपुष्कराणां क्वाथः पिबेद्वात-भवज्वरार्तः ॥ ४७ ॥

## दुरालभादिकाथः ।

दुरालभानागरतिक्तपाठाशठीवृषैरण्डजटाकषायः ॥ पीतः सशूलं शमयेज्ज्वरं च सश्वासकासं पवन-प्रभूतम् ॥ ४८ ॥

## अथ पित्तज्वरलक्षणम् ।

नेत्रे विदाहो मुखतिक्तता तृड्भ्रमः प्रलापो भृशमुष्णमंगम् ॥ वेगोऽतितीक्ष्णः सरणं वमिश्च पीता च भाः पित्तभवे ज्वरे स्यात् ॥ ४९ ॥

## दुःस्पर्शादिकाथः ।

दुःस्पर्शवासाकटुकाहरेणुप्रियंगुभूनिम्बकृतः कषायः ॥ पीतो हि पित्तप्रभवं सदाहं ज्वरं जयेदच्छसितासमेतः ॥ ५० ॥

## लाजतर्पणम् ।

छर्दिदाहान्वितं क्षीणं निरन्नं तृष्णयान्वितम् ॥ शर्करामधुसंयुक्तं पाययेल्लाजतर्पणम् ॥ ५१ ॥

## द्राक्षादिकाथः ।

द्राक्षातिक्काराजवृक्षाद्रिपथ्यारेणुक्काथो हंति पित्तज्वरं हि ॥ तन्द्रातृष्णादाहमूर्च्छाप्रलापैः शोषैर्युक्तं सभ्रमं सप्रमेहम् ॥ ५२ ॥

## कट्फलाद्यवलेहः ।

कट्फलं पौष्करं शृंगी पिप्पली मधुना सह ॥ श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ ५८ ॥

## निर्गुण्डयादिक्राथः ।

सिंदुवारदलक्राथं कणाढ्यं कफजे ज्वरे ॥ जंघयो-श्च बलक्षीणे कर्णो वापि हितं पिबेत् ॥ ५९ ॥

## वातपित्तज्वरलक्षणम् ।

तृष्णाभ्रमो दाहशिरोरुजश्च कंठास्यशोषाऽरुचिरो-महर्षाः ॥ मूर्छाभ्रमच्छर्दिविजृंभणानि निद्रात्ययो मारुतपित्तजे स्यात् ॥ ६० ॥

## बलादिक्राथः ।

बलाऽमृतैरण्डजलोऽब्दपद्मकैर्भार्ङ्गीकणोशीरयुतैस्स-चन्दनैः ॥ क्राथं पिबेत्पित्तसमीरजज्वरप्रणाशनं वह्नि-विवृद्धिकारणम् ॥ ६१ ॥

## अथ वातकफज्वरलक्षणम् ।

स्तैमित्यकासाऽरुचिपर्वभेदशिरोरुजःपीनसमध्यवे-गौ ॥ सन्तापकंपौ गुरुता शरीरे निद्रा व्यथा वात-कफज्वरे स्यात् ॥ ६२ ॥

---

१ मेउडी । २ सुगन्धवाला ।

## क्षुद्रादिकाथः ।

क्षुद्रागुडूचीजगदोषधानां सपौष्कराणां विहितः कषायः ॥ कासाऽरुचिश्वासविबन्धशूले हितो ज्वरे वातकफात्मजे स्यात् ॥ ६३ ॥

## राजद्रुमादिकाथः ।

राजद्रुमाब्दविजयाकटुरोहिणीभिः सग्रंथिकाभिरपरो विहितःकषायः ॥ सामे सशूलकफवातभवज्वरे स्यात् संपाचनो ज्वलनदीप्तिकरःसरश्च ॥ ६४ ॥

## कफपित्तज्वरलक्षणम् ।

कासोऽरुचिर्मोहवमिप्रसेकाः सलिप्ततिक्तं वदनं विगंधि ॥ मुहुर्मुहुर्हर्षणशीतदाहा लिंगज्वरे तत्कफपित्तजे स्यात् ॥ ६५ ॥

## पटोलादिकाथः ।

पटोलमुस्ताजलरक्तचन्दनं तिक्ता रजो विश्वमुशीरवासकम् ॥ संक्वाथ्य तोयं कफजज्वरं च निहंति पानात्परितस्तृषायुतम् ॥ ६६ ॥

आदिमध्यावसानेषु ज्वरस्य श्रुतिमूलजः ॥ शोथोऽसाध्यः कृच्छ्रसाध्यः सुसाध्यः स्यात्क्रमेण तु ॥६७॥

## सन्निपातज्वरलक्षणम् ।

क्षणे क्षणे शीतमथो विदाहः श्वासश्च सन्ध्यस्थि-

१ गनियार । २ सुगन्धवाला ।

शिरस्सु पीडा ॥ संस्रावयुक्ते कलुषे विभुग्ने नेत्रे च रक्तं भ्रममोहकासाः ॥ ६८ ॥

तन्द्रा प्रलापो वमथुर्विनिद्रा कर्णौ सशब्दौ सरुजौ प्रकंपः ॥ कंठस्तु शूकैरिव संवृतो हि स्यात्सन्निपाते कठिना च जिह्वा ॥ ६९ ॥

## ज्वरोपचारः ।

गंडूषो बालुकास्वेदो लंघनं ष्ठीवनांजने ॥ नस्यावलेहौ पूर्वं च सन्निपाते प्रयोजयेत् ॥ ७० ॥

केसरं मातुलुंगस्य सैंधवं मरिचान्वितम् ॥ मुखे धृतं निहंत्याशु जिह्वाशोषमरोचकम् ॥ ७१ ॥

कट्फलादिभवचूर्णविमिश्रः क्वाथ एष दशमूलजो ज्वरम् ॥ आर्द्रकस्वरसतुल्यविभागो मृत्युकल्पमपि हंति त्रिदोषम् ॥ ७२ ॥

## किरातादिकाथः ।

किराततिक्तेन्द्रयवाह्वदारुशुण्ठीगजाह्वादशमूलन्यैः ॥ कृतःकषायःकसनप्रलापश्वासादियुक्तं ज्वरमाशु हन्यात् ॥ ७३ ॥

## ग्रन्थ्यादिकाथः ।

ग्रंथीन्द्रबीजसुरदारुविडंगभार्ङ्गीशृंगीनलात्रिकटुकट्फलपौष्कराणाम् ॥ पथ्याकिरातबृहतीद्वयभूतकेशीरास्नावचाचविकदीप्यवृकीपुराणाम् ॥ ७४ ॥

१ धूपकाष्ठ । २ जटामासी । ३ चाम गजपीपरिकी जड ।

क्काथो निहंति सकलानपि सन्निपातान्धीविभ्रम-श्वसनशैत्यमहाप्रलापान् ॥ आध्मानशूलकफवातभ-वान्प्रसूतीरोगाननेकविधविद्रधिगुल्मशोफान् ॥ ७५ ॥

वचा मधूकसारश्च मरिचं सैन्धवं कणा ॥ सूक्ष्मं पिष्ट्वां भसाम्नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ ७६ ॥

## किरातायुद्धूलनम् ।

किरातकारवी तिक्ता पिप्पली कट्फला वचा ॥ उद्धूलनं संनिपाते स्वेदाऽभिष्यंदिनि ज्वरे ॥ ७७ ॥

## अथ चैतन्यरोटिका ।

रसोनराजिकाचूर्णं तथा सौभांजनोद्भवम् ॥ गोमूत्रेण तु संपिष्य कुर्यात्तद्रोटिकां ततः ॥ ७८ ॥

प्रच्छयित्वा ब्रह्मरंध्रं विषचूर्णं विघर्षयेत् ॥ पूर्वजां रोटिकां पश्चान्मस्तकोपरि दापयेत् ॥ ७९ ॥

तावत्तां स्थापयेन्मूर्ध्नि यावच्चैतन्यवान्भवेत् ॥ अचेतोवांस्तु नो जीवेत्कालपाशावृतः पुमान् ॥ ८० ॥

दंशनं वृश्चिकैस्सर्पैः सन्निपाते सुदारुणे ॥ तदव्याकुलतां यांति क्रियाः कार्या भिषग्वरैः ॥ ८१ ॥

---

श्लोकः—क्षौरकर्म कपाले च चतुरंगुलमायतम् ॥ रोटिकां केतु बध्नीयात् याममात्रं तु वैनरः ॥ अचेतनात्तु चैतन्यं न भवेन्म्रियते ध्रुवम् ॥ १ ॥

२ शिंगियाजहर ।

## अथ पंचवक्ररसः ।

शुद्धसूतविषगन्धटंकणं पिप्पलीमरिचचूर्णसंयुतम्॥ मर्दयेत्कनकबीजजैर्द्रवैरेकमेव दिवसं च शोषयेत्॥८२॥
पंचवक्ररस एष योजितो गुंजिकाद्वयमितः समाक्षिकः ॥ संनिपातमतिदारुणं हरेद्देयमत्र दधिभक्तकं नृणाम् ॥ ८३ ॥

## अथोन्मत्तरसः ।

रसं गन्धं समं कृत्वा धत्तूरफलजै रसैः ॥ मर्दयेद्दिनमेकं तु तत्समं त्र्यूषणं क्षिपेत् ॥ ८४ ॥
उन्मत्तोऽयं रसो नाम नस्ये दत्तस्त्रिदोषजित् ॥

## दंतिबीजाद्यंजनम् ।

निस्तुषं दंतिकाबीजं दशटंकं विचूर्णयेत् ॥ ८५ ॥ मरिचं पिप्पलीमूलं टंकं टंकं विमिश्रयेत् ॥ भाव्यं जंबीरनीरेण सप्ताहं च प्रयत्नतः ॥ ८६ ॥
रसोऽयमंजने दत्तः सन्निपातं विनाशयेत् ॥

## त्रयोदशसन्निपातः ।

संधिगश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ॥ ८७ ॥
सीतांगस्तंद्रिकश्चैव कंठकुब्जश्च कर्णकः ॥ विख्यातो भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ॥ ८८ ॥

जिह्वकश्चेत्यभिन्यासः संनिपातास्त्रयोदश ॥

## सन्निपातमर्यादा ।

संधिगे सप्तरात्राणि चान्तके दश वासराः ॥ ८९ ॥
रुग्दाहे विंशतिर्ज्ञेया त्रयोष्टौ चित्तविभ्रमे ॥ शीतांगे पक्षमेकंतु तंद्रिके पंचविंशतिः ॥ ९० ॥
विज्ञेया वासराश्चात्र कंठकुब्जे त्रयोदश ॥ कर्णके च त्रयो मासा भुग्ननेत्रे दिनाष्टकम् ॥ ९१ ॥
रक्तष्ठीवेदशाहानि प्रलापे च चतुर्दश ॥ जिह्वके षोडपाहानि पक्षोभिन्यासके तथा ॥ ९२ ॥ परमायुरिदं प्रोक्तं म्रियते तत्क्षणादपि ॥

## सन्धिगः ।

विज्ञेयः संधिगः संधिशिरःशूलात्सुदारुणात् ॥ ९३ ॥

## अथ संधिगरूपम् ।

शूलं च शोफो जठरे गुरुत्वं स्रस्तांगता संधिषु वेदना च ॥ बलक्षयोवातकफप्रकोपो निद्रात्ययः संधिगसन्निपाते ॥ ९४ ॥

## रास्नादिक्काथः ।

रास्नापथ्यागुडूची सहचरजलदा भीरु¹शुंठीसुराह्वैस्तिक्ताकर्चूरवासानिलरिपुसहितैः पंचमूलीद्वयेन² ॥ द्रव्यैरेभिः कषायस्त्वरितमपहरेत्संधिगं सन्निपात-

१ सतावरि । २ दशमूल ।

मन्यास्तंभाऽन्नवृद्धिं ज्वरमरुचिमसौ संविगां सर्वपीडाम् ॥ ९५ ॥

## अथ पुना रास्नादिकाथः ।

रास्नासुराह्वासठिवृद्धदारुविश्वागुडूचीत्रिफलावरीभिः ॥ क्वाथः कृतो गुग्गुलुसंप्रयुक्तो निहंतिसंधिग्रहसन्निपातम् ॥ ९६ ॥

## अंतकः ।

दाहप्रकंपो भृशमुष्णमंगं मूर्ध्नः प्रकंपः कसनं च हिक्का ॥ श्वासप्रमोहौ सततं च यस्मिंस्तमन्त कारूयं विबुधास्त्यजेयुः ॥ ९७ ॥

## रुग्दाहः ।

प्रलपनपरितापं भ्रांतिमोहप्रकंपा भ्रमणदहनमांद्यं कंठमन्याग्रहश्च ॥ श्वसनकसनशूलं व्याकुलत्वं तृडर्तिर्भवति मृतिरहो रुग्दाहके सन्निपाते ॥ ९८ ॥

## हरीतक्यादिकाथः ।

हरीतकीपर्पटतिक्तरोहिणीसुरद्रुमारग्वधगोस्तनीघनैः ॥ कृतः कपायस्त्वरितं महाज्वरं निहंति रुग्दाहकसन्निपातम् ॥ ९९ ॥

## चित्तभ्रमः ।

भ्रममदपरितापा मोहवैकल्यभावा विकलनयनहास्यं गीतनृत्यप्रलापाः ॥ श्वसितमधिक-

मेतल्लक्षणं यत्र सर्वं भवति च तमसाध्यं कोपि चित्त-भ्रमाख्यम् ॥ १०० ॥

## ब्राह्म्यादिकाथः।

ब्राह्मीवचाभीरु फलत्रिकेण तिक्ताबलाऽरग्वधतिक्तकेन ॥ निम्बाऽब्दकोशातकिहारहूराद्विपंचमूलीभिरसौ कषायः ॥१०१॥ पीतो हि चित्तभ्रमसंनिपातं निहंति रुग्दाहमपि प्रभूतम् ॥

## शीतांगः।

तुषारशीतं सकलं शरीरं प्रकंपहिक्के शिथिलांगता च ॥ १०२ ॥ खिन्नःस्वरः कासवमिप्रसेकाः सशीतगात्रःशरणार्थमुक्तः ॥ प्रभूततन्द्राज्वरवेगतृष्णा श्यामा खरस्पर्शवती च जिह्वा ॥ १०३ ॥

## भाङ्गर्यादिकाथः।

श्वासाऽतिसारौ वमथुः प्रदाहः कर्णे रुजस्तंद्रिकसन्निपाते ॥ भार्ङ्गीगुडूचीघनकंटकारीहरीतकीपौष्कर-नागराणाम् ॥ १०४ ॥ कृतः कषायस्त्रिदिनं निपीतो घोरं जयेत्तंद्रिकसन्निपातम् ॥

## कंठकुब्जः।

शिरोव्यथादाहहनुग्रहाश्च संतापमूर्च्छागलरोध-पाकाः ॥ १०५ ॥ प्रवेदना वातभवाः प्रलापाः सकष्टसाध्यः किल कंठकुब्जः ॥ १०६ ॥

## शृंग्यादिक्काथः ।

शृंगीचित्रकचेतकीवृषसठीभूनिम्बभार्ङ्गीनिशाव्या-
घ्रीपौष्करमुस्तवत्सकयवैस्तिक्तामरीचान्वितैः ॥ क्वाथः
कृन्तति कंठकुब्जमचिराद्दाहप्रमोहारुचिश्वासाऽध्मा-
नगलग्रहाऽग्निसदनाऽभिन्यासकासान्वितम् ॥१०७॥

## कर्णकः ।

कंठग्रहायासशरीरपीडासंतापकासश्वसनप्रसेकाः[1] ॥
शोफश्च शूलं बहु कर्णमूले सकष्टसाध्यः किल कर्ण-
काख्यः ॥ १०८ ॥

## रास्नादिक्काथः ।

रास्नाऽश्वगन्धावनकंटकारीभार्ङ्गीवचापौष्कररोहि-
णीनाम् ॥ क्वाथःकृतःशृंग्यभयायुतानां पीतो जयेत्क-
र्णिकसन्निपातम् ॥ १०९ ॥

## निशादिलेपः ।

निशेंगुदीसैंधवदारुकुष्टदार्वीविशाला[2] रविदुग्धलेपः ॥
तं कर्णिकग्रंथिमपाहरेद्धाजलौकसांपातनमत्र शस्तम् ॥

## भुग्ननेत्रः ।

स्मृतिशून्यता ज्वरविवृद्धिरति श्वसनं विभुग्नतरले
नयने ॥ भ्रमकम्पनप्रलपनानि मृतिः कथितो विभुग्न-
नयनो मुनिभिः ॥ १११ ॥

---

१ प्रसेक । २ इन्द्रवारुणी । ३ मंदारकादूध ।

## दार्व्यादिकाथः ।

दार्वीपटोलीघनकंटकारीतिक्तानिशानिंबफलत्रिकाणाम् ॥ क्वाथो नियोज्यो गुरुसन्निपाते विघुग्ननेत्रे प्रतिबोधनाय ॥ ११२ ॥

## रक्तष्ठीवी ।

रक्तष्ठीवी भवति मनुजो यत्र तृष्णाप्रमोहो श्वासःशूलं भ्रमवमिमदाऽध्मानसंज्ञाप्रणाशः ॥ श्यावारक्तातनुरतितरां दाहहिक्काऽतिसारा रक्तष्ठीवी सुमुनिभिरुदितः प्राणहा सन्निपातः ॥ ११३ ॥

## जलदादिकाथः ।

जलदपद्मकपर्पटचंदनैर्मधुकवारिवरीमलयोद्भवैः ॥ समधुमालतिपत्रसुभद्रकैःक्वथितमम्बु मुखास्रनिवारणम् ॥ ११४ ॥

## दूर्वादिनस्यम् ।

देयं दूर्वारसैर्नस्यं रसैर्दाडिमपुष्पजैः॥ अथवा त्रिफलादूर्वाजलं रक्तहरं परम् ॥ ११५ ॥

## अथ प्रलापकसन्निपातः ।

कंपःप्रलापः परितप्तमंगदाहो ज्वरस्याभ्यधिको हि वेगः ॥ संज्ञाविनाशो विकलांगता च प्रलापको साध्यतमो मतश्च ॥ ११६ ॥

## अथ मुस्तादिकाथः ।

मुस्तवारि दशमूलनागरं पर्पटो मलयजं धव-त्वचः ॥ वासकः कृतसमानविभागः काथएषहरतिप्रला-पकम् ॥ ११७ ॥ पीतो द्वात्रिंशदाख्यः कसनगलगद् श्वाससाध्यास्थिशूलम् ॥ हिक्काध्मानादियुक्तान्जयति गुरुतरान् सन्निपातान्समस्तान् ॥ ११८ ॥

## अर्कादिकाथः ।

अर्कव्योषं चित्रकं चव्यं दारु शिग्रुस्तिक्तो मार्कवः शुक्तिकंदा ॥ रास्नानन्तासिंदुवारोग्रगंधातर्कारीभिः पीत-मात्रः कषायः ॥ ११९ ॥ सद्यो हन्यात्सन्निपातान्स-मग्रान्छैत्यश्वासं सूतिकावातरोगान् ॥ जिह्वास्तंभं शुण्डिकाकर्णशोथमंगस्तंभं क्रोष्टुशीर्षं तथैव ॥ १२० ॥

## रसोनाद्यंजनम् ।

रसोनकृष्णामरिचोग्रगंधास्योनाकबीजं लवणोत्तमं च ॥ गोमूत्रपिष्टं नयनांजनं स्यात्समस्तदुष्टग्रह-सन्निपाते ॥ १२१ ॥

## मरीचादिनस्यम् ।

मरिचं मधुकं ससैन्धवं नलदं कट्फलपिप्पलीयु-तम् ॥ नरिनावनमुष्णवारिणा मृदु कृत्वा हरति त्रिदोषजम् ॥ १२२ ॥

---

१ त्रिकुटा । २ कारवतकैजड । ३ मैंसाकंद टिहक्त वा अतीर्श ।

## पादादिदाहः ।

एवंविधेस्मिन्विहिते विधाने न यातिसंज्ञां यदि पश्य जंतुः ॥ तं पादमूले भ्रुकुटीललाटे शलाकया लोहजया दहेत्तु ॥ १२३ ॥

## विषमज्वरलक्षणम् ।

शीतोष्णाभ्यामनियतात्कालाद्यश्च प्रवर्त्तते ॥ विषमातितीक्ष्णवेगात्तु स ज्वरो विषमः स्मृतः ॥ १२४ ॥

## संततादिज्वरलक्षणम् ।

संततः संततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ विषमाः पंच विज्ञेया ज्वरोत्कृष्टस्य वा पुनः ॥१२५॥ दोषोल्पो हितसंभूतः करोति विषमज्वरान् ॥ सप्तरात्रं दशदिनं द्वादशाहमथोत्तरम् ॥ १२६ ॥ संतत्या योविसर्गीस्यात्संततःसहि कथ्यते ॥ कालद्वयं सततको दिवारात्रौ प्रवर्त्तते ॥ १२७ ॥ नक्तंदिनादेककालमन्येद्युष्कः प्रवर्त्तते ॥ तृतीयकस्तृतीयेह्नि चतुर्थेऽह्निचतुर्थकः॥१२८॥

## संततज्वरक्वाथः ।

त्रायन्ती[1]सारिवा[2]ऽनन्ता[3]कटुका[4]भिः शृतं जलम् ॥ वातादीनां निवृत्त्यर्थं संतताख्ये ज्वरे हितम् ॥१२९॥

---

१ धनासा । २ दुधबबरिया । ३ उस्वा । ४ कुटकी ।

## अथपटोलादिकाथः सततज्वरे ।

पटोलपथ्यापिचुमंदशक्रबीजाऽमृतायासकृतः कषायः ॥ निपीतमात्रः शमयत्युदीर्णं कासादियुक्तं सततज्वरं हि ॥ १३० ॥ द्राक्षापटोलीपिचुमंदमुस्ताकलिंगबीजत्रिफलाकषायः ॥ पीतः प्रभाते ज्वरमुग्रवेगमेकाहिकं नाशयति प्रसह्य ॥ १३१ ॥

## तृतीयकज्वरे चंदनादिकाथः ।

चन्दनमुस्तगुडूचीधान्योशीरनागरैः कृतःक्वाथः ॥ मधुशर्करया युक्तो हन्ति तृतीयकज्वरं पुंसाम्॥१३२॥ स्थिराशिवानागरदेवदारुधात्रीरसैः संविहितः कषायः॥ पीतः सितामाक्षिकसंप्रयुक्तो निहन्ति चातुर्थिकमुग्रवेगम् ॥ १३३ ॥

## चातुर्थिकज्वरे नस्यम् ।

रामठपुराणघृतयोर्नस्यं चातुर्थिकं ज्वरं हन्यात् ॥ अगस्त्यपत्रस्वरसो तस्मै दत्तोऽथवा जयेत् ॥ १३४

## विषमज्वरोपचारः ।

विषमं तु निहंत्यूर्द्ध्वमधो वा शोधनं परम्॥ एकैक मधुना हन्ति त्रिवृत्कृष्णा हरीतकी ॥ १३५ ॥ पथ्याशकसमं चूर्णं कर्षमात्रं गुडेन तु ॥ भक्षितं नाशयत्याशु शीतकं विषमज्वरम् ॥ १३६ ॥ चेतोमुषां पीनपयोधराणां कस्तूरिकाकुंकुमचर्चितानाम् ॥ शीत

ज्वरे शस्तमथांगनानामालिंगनं चारु हिमावधि स्यात् ॥ १३७ ॥

## व्याघ्रादिक्वाथः ।

व्याघ्रीविश्वविर्तुन्नपुष्कररजोभूनिम्बवासाऽमृता भार्ङ्गीनिंबपटोलपद्मकघनैस्तिक्ताकलिंगैः कृतः ॥ क्वाथो हन्ति सचन्दनः कफमरुत्पित्तं सदाहं तृषाम् कासं पंचविधं तथा कृमिरुजं पाण्डुं वमिं कामलाम्॥१३८॥

## अथ पटोलादिक्वाथः ।

पटोलपथ्याघनरोहिणीभिर्भूनिम्बयष्टीमधुकाऽमृताभिः॥ कृतः कषायो विषमज्वरेषु सर्वेषु शस्तः कसनारुचिघ्नः ॥ १३९ ॥

## लशुनयोगः ।

तिलतैलेन संमिश्रं रसोनं च सुकल्पितम् ॥ भक्षितं नाशयेद्वातं सुघोरं विषमज्वरम् ॥ १४० ॥

## शर्कराजीरकयोगः ।

सिताजीरकसंयुक्तो द्रोणपुष्पीभवो रसः ॥ पलमानो हरेत् पीतो विषमज्वरमुद्धतम् ॥ १४१ ॥

## षोडशाङ्गचूर्णः ।

भूनिम्बपथ्याघनकण्टकारी त्रायन्तिकानागरयास-

---

१ कुरह । २ रज रेनुका । १ वनप्सा ।

तिक्ताः ॥ वाट्यालकचूर्रकणापटोलमु[illegible]पर्पटाश्च ॥ १४२ ॥ असौ मतः षोडशकांगचूर्णो ज्वरान्समग्रान् विषमान्निहंति ॥ १४३ ॥

## निद्रानाशोपचारः ।

कर्षार्द्धं पिप्लीमूलं गुडेन विलिहन्निशि ॥ चिरादपि च संनष्टां निद्रामाप्नोति मानवः ॥ १४४ ॥ देयं दिनान्ते लघुभोजनं च गतज्वरायाप्यगतज्वराय ॥ तदा कफस्योपशमोपलब्धिरूष्मा प्रवृद्धः प्रबलो हि वह्निः ॥ १४५ ॥

## अथ जीर्णज्वरलक्षणम् ।

सप्तत्रयदिनादूर्द्धं तनुतां प्राप्य तिष्ठति ॥ प्लीहाग्निमांद्यं तनुते स जीर्णज्वर उच्यते ॥ १४६ ॥

## क्षुद्रादिक्काथः ।

क्षुद्राऽमृतानागराणां क्काथः कृष्णासमन्वितः ॥ जीर्णज्वरकफश्वासकासाऽरोचकनाशनः ॥ १४७ ॥ सठीरजोनागरदेवदारुरास्नाऽब्दतिक्ताबृहतीकिरातैः ॥ क्काथः कणामाक्षिकसंप्रयुक्तो जीर्णज्वरघ्नो विषमज्वरघ्नः ॥ १४८ ॥

## धात्र्यादिचूर्णम् ।

धात्री हरीतकी कृष्णा चित्रकः सैन्धवस्तथा ॥

१ दुर्वेला ।

एषां चूर्णोऽग्निमांद्यघ्नः सर्वज्वरविनाशनः ॥ १४९ ॥

## जीर्णज्वरघृतम् ।

ज्वराः कषायैर्वमनैर्विरेकैः शाम्यन्ति नो तत्र घृतं प्रदेयम् ॥ शुंठीकणाग्रंथिकचव्यवह्निक्षाराः पृथक्त्वेकपलप्रमाणाः ॥ १५० ॥ प्रस्थं घृतं नागरवारिमस्तुप्रस्थद्वयं तद्विपचेत्कटाहे ॥ संसिद्धमाज्यं विषमज्वरेषु जीर्णज्वरे वर्षभवेऽपि शस्तम् ॥ १५१॥

## अथ लाक्षादितैलम् ।

लाक्षारसस्याढक मच्छतैलप्रस्थं पचेन्मस्तु चतुर्गुणं च ॥ पिष्ट्वा शताह्वा रजनी मधूकं रास्नाऽश्वगंधा कटुका समूर्वा ॥ १५२ ॥ हरेणुकं चन्दनमुस्तदारुकुष्ठं पृथक्कर्षमितं क्षिपेत्तत् ॥ लाक्षादिकं तैलमिदं सुसिद्धं निहन्ति सर्वान्विषमज्वरांस्तु ॥ १५३ ॥ पृष्ठत्रिकांगस्फुटनं सशूलं दौर्गन्ध्यकंडूभ्रमवातरोगान् ॥ निहंति वातज्वरपित्तमेतत् शीतं शरीरं सकलं करोति ॥ १५४ ॥

## अथ शीतारिरसः ।

मनशि॒लाताल॒कतुत्थताम्र॒रसेन्द्र॒गंधं समकर्षभा-

---

१ मैनशिल । २ हरताल । ३ तूतियां । ४ तामामस्म । ५ पारा शुद्ध । ६ औंरासारगंधक ।

गम् ॥ समर्दयेत्तत्रिफलारसेन गोलं न्यसेत्संपुटके प्रदद्यात् ॥ १५५ ॥ पुटन्तथोद्धृत्य च भानुवल्रीदुग्धेन भाव्यं किल सप्तवारम् ॥ क्वाथेन दन्तीत्रिवृतोद्भवेन विभावनाः सप्त पुनः प्रदेयाः ॥ १५६ ॥ ततोऽस्य माषं मरिचैश्शतार्धैर्गद्याणमात्रेण गुडेन युक्तम् ॥ सम्भक्षयेन्ना तुलसीदलाभ्यां दिनत्रयं पथ्यमिहौदनं च ॥ ॥ १५७ ॥ शीतारिनामा रस एष हन्ति शीतज्वरं घोरतरं सवातम् ॥ १५८ ॥

## अथ विगतज्वरलक्षणम् ।

गात्रे लघुत्वं शिरसश्च कंडूः पाको मुखे सौष्ठवमिन्द्रियाणाम् ॥ स्वेदोऽन्नकांक्षा क्षवथोः प्रवृत्तिः स्याच्चिह्नमैतद्विगतज्वरस्य ॥ १५९ ॥

## अथ मृत्युकारकज्वरः ।

यो हृष्टरोमा हृदि शूलतापयुक्तः प्रताम्यञ्छ्वसतीह चोर्द्ध्वम् ॥ स्वेदो ललाटे न तु याति वक्षः स शीतगात्रो मरणार्थसुक्तः ॥ १६० ॥

## अथ ज्वरदशोपद्रवः ।

तृष्णामूर्छारुचिः श्वास श्छर्द्यतीसारविड्ग्रहाः ॥ कासो हिक्कांगभेदश्च ज्वरस्योपद्रवा दश ॥ १६१ ॥

## अथज्वरे वर्ज्यम् ।

व्यायामं च व्यवायं च स्नानं चंक्रमणं तथा ॥ ज्वरमुक्तो न सेवेत यावन्नो बलवान्भवेत् ॥ १६२ ॥

इति श्रीमदनन्तभट्टात्मजशंकरविरचिते वैद्यविनोदे ज्वरलक्षणचिकित्साकथनं नाम प्रथमोल्लासः ॥ १ ॥

---

# अथ उल्लास २ ।

## अथाऽतीसारलक्षणम् ।

स्निग्धोष्णशीतगुरुरूक्षविरुद्धमद्यपानाऽतिशीलनविषाऽध्यशनाऽभिघातैः ॥ स्नेहातिपानभयसात्म्यविपर्य्ययैश्च नृणां भवेत्कृमिगदाप्रबलोऽतिसारः ॥१॥

## अतिसारसंप्राप्तिः ।

संशम्य वृद्धो जलधातुरग्निं वर्चोविमिश्रो मरुताऽधस्तात् ॥ यः पूर्यमाणः सरति प्रकृष्टं षोढाऽतिसारं मुनयो वदन्ति ॥ २ ॥

एकैकशः सर्वशश्च दोषैरामेन शोकतः ॥ दोषावस्था नैकरूपा भवत्यर्ति प्रतिक्षणम् ॥ ३ ॥

## अथाऽतिसारपूर्वलक्षणम् ।

हृत्कुक्षिनाभ्यपाने रुग्गात्रे सादोऽनिलग्रहः ॥अविपाकः शकृत्संग आध्मानं पूर्वलक्षणम् ॥ ४ ॥ न स्त-

म्भयेदतीसारमपक्वं वृद्धिमागतम् ॥ विनाक्षीणास्य वृद्धस्य गर्भिण्या बालकस्य च ॥५॥ यवागूवा लाजमंडेन तक्राजाजीयुतेऽथवा ॥ मुद्गयूषरसेनैवमतीसारमुपाचरेत् ॥ ६ ॥

## अथ वाताऽतिसारः ।

रूक्षं फेनिलमल्पमल्पमरुणं सामं सशब्दंसरुक् । विद्श्यावं कठिनं विबद्धमसकृद्वाताऽतिसारे भवेत्॥७॥

## कलिंगादिक्वाथः ।

कलिंगबीजाब्दसलोध्रबिल्वमाम्रास्थिधात्रीकुसुमानि चूर्णम्॥ प्रातःपिबेन्माहिषतक्रमिश्रं वाताऽतिसारं प्रबलं निहन्ति ॥ ८ ॥

## अथ पित्ताऽतिसारः ।

पित्तात्पीतमथोष्णनीलमरुणं दुर्गन्धि तीक्ष्णं शकृत्॥ खिन्नांगो विसृजेत्सदाहमसकृत्तृड्दाहपाकान्वितः ॥९॥ बिल्ववालुकजीमूतकलिंगाऽतिविषाकृतः ॥ क्राथो जयेदतीसारं सामं पित्तसमुद्भवम् ॥ १० ॥

## अथ श्लेष्माऽतिसारः ।

सांद्रं सितं श्लेष्मविमिश्रितं स्याच्छ्लेष्माऽतिसारे भृशगंधि शीतम् ॥११॥ चव्यं कुष्टं बालबिल्वं कलिंगं

१ नागरमोथा ।

बीजं शुंठी वत्सकत्वक् प्रपथ्या ॥ एषां क्वाथः शुक्र-कन्दा युतानां श्लेष्मोद्भूतं हन्त्यतीसारमुग्रम् ॥१२॥

## अथ त्रिदोषाऽतिसारः

वाराहमांसांबुसमं त्रिदोषाद्विद्यादतीसारमनेकरूपम् ॥ तन्द्रातृषादाहमदास्यशोषभ्रमान्वितोमोहसमन्वितानाम् ॥१३॥ पञ्चमूलममृताजलपाठाबिल्वतिक्तघनविश्वबलाभिः ॥ त्वक्फलैःकुटजजैरतिसारं क्वाथ एष हरति त्रिमलोत्थम् ॥ १४ ॥

## अथ रक्ताऽतिसारः ।

शोचतो विविधैर्भावैः पित्तलैरतिसेवितैः ॥ बाष्पोष्मा कोष्ठमाविश्य रुधिरं क्षोभयेत्तु तत् ॥१५॥ गच्छेदधस्ताद्गुंजाभं रक्ताऽतीसारमुच्यते ॥ १६ ॥

## वत्सकादिक्काथः ।

वत्सकांऽतिविषाबिल्वैः समुस्तैः सजलैः कृतः ॥ कषायो हन्त्यऽतीसारं शूलशोणितसंयुतम् ॥१७॥ रसांजनं सातिविषंसवत्सकं सधातकीनागरशक्रबीजकम् ॥ चूर्णं हरेत्तंदुल धावनेन रक्ताऽतिसारं मधुयुक्तमाशु १८॥

## पथ्यादिचूर्णम् ।

पथ्यां वचां चाऽतिविषां विचूर्ण्य सौवर्चलं हिंगु

---

१ अतीसा । २ कोरैयाछाल । ३ सुगंधवाला । ४ चाउरका धोवन ।

कलिंगबीजम् ॥ चूर्णं प्रदेयं रुधिराऽतिसारे सामे सबन्धे गुदशूलयुक्ते ॥ १९ ॥

## अथाजीर्णोऽतिसारः ।

अन्नाऽजीर्णोपद्रुताः क्षोभयन्तो दोषाः कोष्ठे धातुसंघान्मलांश्च ॥ नानावर्णं नैकसंसारयंति शूलोपेतं षष्ठ मेनं वदंति ॥ २० ॥ अजीर्णोपद्रुता दोषाः कोष्ठं धातून्मलान्सरुक् ॥ क्षोभयन्तः सारयंति षष्ठमामं वदं तितम् ॥ २१ ॥

## अथ वितुन्नकादिकाथः ।

वितुंन्नकं नागरबालबिल्वं ह्रीवेरमुस्तं च कृतः कषायः॥आमाऽतिसारं शमयेत्सशूलं ज्वरे हितो दीपनपाचनश्च ॥ २२ ॥ हरीतकी क्षौद्रयुता निहन्यादामाऽतिसारं गुदशूलयुक्तम् ॥अथाऽभयानागरमुस्तचूर्णं गुडेनयुक्तं गुरुमाऽमबंधम्॥२३ ॥ आमाऽतिसारे वमनं लंघनं च यथोचितम् ॥ मार्कवस्वरसो दध्ना सर्वाऽतीसारनाशनः ॥२४॥ बब्बूलपत्रस्वरसो धत्तूरफलजोपि वा ॥ पीतः प्रशमयेत्सर्वानतीसारान्सुदुस्तरान् ॥२५॥ कासमर्दस्य मूलन्तु घृष्ट्वा तंदुलवारिणा ॥ बृद्धबालातिसारेषु पेयं परममौषधम् ॥ २६ ॥ चिरोत्थित-

१ षष्टमाम=पितधरोकला । २ वनिया । ३ उबांत । ४ उपवास ।

मतीसारं रोलो हन्यात्सितायुतः ॥ गुडेन भक्षयेद्बिल्व रक्ताऽतीसारनाशनम् ॥ २७ ॥ छिन्नापाठोसीरबिल्वा-ब्दवारि शुंठी पद्मंचन्दनं वत्सकं च॥धान्यं तिक्तं शुक्क-कन्दाकषायः शीतः पीतः सज्वरं चाऽतिसारम् ॥२८॥ हन्यात्तृष्णाऽरोचकं ग्लानिदाहं हृल्लास्यं वै शूल-शोफादियुक्तम् ॥ २९ ॥

## विजयायोगः ।

मधुना विजयाभवं रजो निशि लीढं विधिना सुभर्जितम् ॥ अतिसारमनिद्रतां हरेद्ग्रहणीं वा दहनस्य मंदताम् ॥ ३० ॥

## वत्सकावलेहः ।

क्वाथो वत्सकजो नितांतविमलः पादावशेषः स्थितो मुस्ताक्षारविडेन्द्रबीजरुचकं सिन्धूद्भवं धातकी ॥ कृष्णा चेति विचूर्णितं सममिदं संपाचयेत्पावके यावत्त-घ्नतां प्रयात्यतितरां शीते मधु प्रक्षिपेत् ॥ ३१ ॥ सिद्धो वत्सकलेह एष शमयेत्कृच्छ्राऽतिसारान्रुजं दुर्नामग्रहणीभगंदरगदश्वासप्रमेहान्वमिम् ॥ ३२ ॥ बिल्वं छागीपयः सिद्धं रक्ताऽतीसारनाशनम् ॥ गुरुवृ-ष्यान्नपानानि लवणं न प्रयोजयेत् ॥ ३३ ॥

१ करायल। २ अतीश। ३ कोरैयाछाल।

## अरिष्टः ।

हिक्काग्निसादारुचिर्वांतिकासाःसुशीतदेहोन्तरऽतीव दाहः ॥ मूत्रग्रहो यस्य भवेद्धिचिह्नं नूनं यमस्यैव गृहं स याति ॥ ३४ ॥ विनोत्सर्गं भवेन्मूत्रं तथा वायुः प्रवर्तते ॥ कोष्ठे लघुत्वं दीप्ताऽग्निर्गतस्तस्योदराऽऽमयः ॥ ३५ ॥

## अथ ग्रहणीरोगः ।

गतेऽतिसारे गतपावकस्य विरुद्धदुष्टाऽहितभोजनस्य॥ वह्निः प्रदुष्टो ग्रहणी च भूयः संदूषयेत्तां विधिवच्चिकित्सेत् ॥ ३६ ॥ षष्ठी कला पित्तधरा मता या पक्वाशयामाशयमध्यगां ताम् ॥ वदन्ति वैद्या ग्रहणीं प्रदुष्टां मुंचेदपक्वं बहुशो हि भुक्तम् ॥ ३७ ॥

## ग्रहणीभेदाः ।

वातादधस्ताद्विसृजेद्धि वर्चं चिरेण दुःखं द्रवशुष्कमामम् ॥ पीतं भृशोष्णं बहु गंधि पित्तात्स्निग्धं सितं श्लेष्मयुतं कफाच्च ॥ ३८ ॥

## ग्रहण्युपचारः ।

दीपनान्यन्नपानानि पंचकोलयुतानि च ॥ तक्रं पेयादिलघ्वन्नं ग्रहण्यां सर्वदा हितम् ॥ ३९॥

## शुंठ्यादिक्काथः ।

शुंठीगुडूचीघनशुक्ककन्दाक्काथं पिबेत्संग्रहणीगदे च॥ आमानुबन्धे सततास्मदोषे वातोद्भवे वह्निविवर्द्धनाय ॥ ४० ॥

## रसांजनादिचूर्णम् ।

रसांजनं साऽतिविषं कलिंगबीजस्त्वचो धातकिपुष्पकाणि॥ चूर्णं पिबेत्पित्तभवग्रहण्यां समाक्षिकं तंदुलधावनेन ॥ ४१ ॥

## तिक्तादिक्काथः ।

तिक्तामहौषधरसांजनधातकीभिः पथ्यैन्द्रबीजघनकौटजभंगुराभिः ॥ क्काथं हरेद्बहुविधं ग्रहणीविकारं पित्तोद्भवं सगुदशूलमतिप्रवृद्धम् ॥ ४२ ॥

## पथ्यादिचूर्णम् ।

पथ्याकणानागरवह्निचूर्णं तक्रेण पीतं ग्रहणीगदघ्नम् ॥ तक्रेण हन्यात्किल केवलं वा शुंठी कफोत्थां ग्रहणीं सशूलाम् ॥ ४३ ॥

## दुग्धयोगः ।

बिल्वमोचरसवालुकमुस्ताशक्रबीजकुटजैरितिसिद्धम् ॥ दुग्धमाजमपहन्ति चिरोत्थां वातपित्तकफजां ग्रहणीं च ॥ ४४ ॥

## अथ लायीचूर्णम् ।

कर्ष बलिं पारदमर्द्धकर्षमुभौ शुभां कज्जलिकां विधाय॥कर्षत्रयं त्र्यूषणतो हि सार्द्धं कर्षं पृथग्वै लवणानि पंच ॥४५॥दीप्यासु भृष्टं जरणं सहिंगु सटंकणं कर्षयुतं पृथक् च ॥ पलद्वयं स्याद्विजया सुभृष्टा प्रत्येकमेतन्ममूर्णं विचूर्ण्य ॥ ४६ ॥ शाणं पिबेदस्य हि कांजिकेन तक्रेण जंबीररसेन वापि ॥ मन्दाग्निसंदीपनमाशु सर्वं ग्रहण्यतीसारविनाशकारी ॥ ४७ ॥ दुर्नामशूलं कृमिजांश्च रोगान् यक्ष्माणमुग्रं जयति प्रसह्य ॥ रसायनं बुद्धिविकाशकारि चूर्णं प्रदिष्टं सकलाऽमयघ्नम् ॥ ४८ ॥

## अथ कनकरसः ।

दरदमरिचगंधं पिप्पली टंकणं वै गरलकनकबीजं मर्दयेत्तज्जयाभिः ॥ प्रहरमिदमशेषं भक्षितो गुञ्जमात्रस्त्विति कनकरसोऽयं हन्ति कोपं ग्रहण्याः ॥४९॥

## अरिष्टलक्षणम् ।

वृद्धस्य शोफयुक्तस्य गतवह्निबलस्य च ॥ ग्रहण्यां तस्य भिषजा क्रियास्त्याज्या यशोर्थिना ॥५०॥

---

१ सिंगरिफ़ । २ औंरासारगंधक । ३ सोहागाका लावा । ४ शुद्धसिंगियाजहर । ५ धतूरका बीज । ६ जयंतिका रस ।

## अथातोऽर्शसां लक्षणचिकित्सा ।

त्वग्मांसमेदांसि विदूष्य दोषा मांसांकुरान् यांश्च गुदे प्रकुर्युः ॥ तानाहुरर्शांसि पृथक् समस्तैर्दोषैस्तु रक्तात्सहजानि षोढा ॥ ५१ ॥

## पूर्वरूपम् ।

विष्टब्धतान्नस्य शकृद्विबन्धो मन्दाग्नितोद्गारबहुत्वकार्श्यम् ॥ कुक्षेस्तथा टोपनमंगसादो दुर्नामवृद्धौ प्रथमं भवन्ति ॥ ५२ ॥

## वातादिलक्षणम् ।

वाताद्रोधः श्लेष्मणः शोफकंडू पित्तोद्रेकाच्छोणितस्य प्रसेकः ॥ सर्वं चिह्नं सन्निपातोद्भवे स्यादर्शोरोगे जन्मतो वा प्रभूते ॥ ५३ ॥

## तत्रौषधम् ।

तरुणान्यर्कपत्राणि पंचैव लवणानि च ॥ युक्तानि तैलेनाम्लेन दहेत्क्षारश्च युक्तितः ॥ ५४ ॥ उष्णोदकेन मद्यैर्वा पीतो वातार्शसां हितः ॥ ५५ ॥ चूर्णं तिलानां सितया समेतं हैयंगवीनं गजकेसरं च ॥ लिहान्नरो यो न हि तस्य दुष्टान्यर्शांसि पित्तप्रभवानि जातु ॥५६॥

---

१ चर्मकील । २ मड़ । ३ डेंकार । ४ देहके कोठोंमें ।

कफजे शृंगबेरस्य क्काथो नित्योपयोगिकः ॥ अर्शो-ऽतिसारग्रहणीविकारा ये परस्परम् ॥ ५७ ॥ निदान-भूताः प्रायेण तेषामग्निकरं हितम् ॥ ५८ ॥ चित्रकं सहपुंषं सरामठं यः पिबेल्लवणतक्रसंयुतम् ॥ पंचकोल-सलिलं च वा पिबेत्तस्य यांति गुदजानि सत्वरम् ॥ ॥ ५९ ॥ करंजशुठीन्द्रयवारलूनां सिन्धूत्थवह्निं प्रति-मिश्रिताह्नाम् ॥ तक्रेण चूर्णं पिबतोऽस्य नित्यमर्शांसि रक्तेन पतन्ति सार्द्धम् ॥ ६० ॥ मनुष्यकेशा-ऽर्कजमूलसर्पनिर्मोकदंता वृषभस्य चर्म ॥ धूपः शमीपत्रसमं नराणामर्शांसि दुष्टान्यपि संनिहन्ति ॥ ॥ ६१ ॥ निशाकोशातकीलेपः सर्वदुर्नामनाशनः ॥ अर्कपत्रं शिग्रुमूलं लेपनं हितमर्शसाम् ॥ ६२ ॥ निम्बाऽश्वमारपत्राणां लेपो दुर्नामनाशनः ॥ आरनालेन वा हन्यात्सगुडां कटुतुम्बिकाम् ॥ ६३ ॥ एरण्डमूलं सुरदारुरास्नायष्टीमधूकं ममृणं विचूर्ण्य ॥ पिष्टं यवानां च चतुर्गुणं स्यात्संसाध्य वह्नौ पयसा समस्तम् ॥ ६४ ॥ स्वेदोपनाहौ बहु तेन कुर्याद-र्शांसि शूलानि लयं प्रयान्ति ॥ ६५ ॥ अर्शांसि नाशयत्याशु गुड़युक्ता हरीतकी ॥ तिलाऽरुष्कर संयो-गो दुर्नाम्नामन्तकारकः ॥ ६६ ॥

१ हाऊबेर । २ सोनापाठान । ३ कांजीसेंही कपडाछान । ४ अरुष्कर–भेलोकपुर ।

## अथ पर्पटीरसः ।

रसेन्द्रं[1]गंधं[2] सुदृढं विमर्द्य सर्पिःप्लुतं तद्द्विगुणं च चोलम् ॥ तद्वत्पचेल्लोहमयं द्रवं स्यात्क्षिपेच्च रम्भाद्लग्युग्ममध्ये ॥ ६७ ॥ ततो रसः पर्पटिकाऽभिधानः समस्तदुर्नामनिकृन्तनः स्यात् ॥ संसेवितो वल्लचतुष्कमात्रमर्शोभवं शूलमपाकरोति ॥ ६८ ॥ शोफाऽतिसारौ वमिरङ्गसादस्तृष्णाज्वराऽरोचकवह्निमांद्यम् ॥ गुदस्य पाको हृदयेपि शूलमर्शोविकारी विजहाति जीवम् ॥ ६९ ॥

इति श्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदेऽतिसारग्रहण्यर्शरोगचिकित्साकथनं नाम
द्वितीयोल्लासः ॥ २ ॥

---

## अथाऽजीर्णलक्षणचिकित्सा ।

मन्दोऽथ तीक्ष्णो विषमः समश्च चतुर्विधो जाठरवह्नियुक्तः॥ स्याच्छ्लेष्मपित्ताऽनिलवृद्धिसाम्यात्स्वल्पापि मात्रा न पचेद्धि मंदात् ॥१॥ पाकाविपाकौ विषमाद्भवेतां मात्राऽतिमात्रा विपचेच्च तीक्ष्णात् ॥ श्रेष्ठः समस्तेषु समाग्निरेको मंदादजीर्णादिगदा भवंति ॥२॥

१ पारा । २ गंधक । ३ कोठेमीतर ।

## अलसकलक्षणम् ।

तस्मादजीर्णादलसः सुचोरो विलंबिका कष्टतरा विषूची ॥ अत्यर्थविड्वातनिरोधको यस्तृष्णान्वितः सोऽलसकः प्रदिष्टः ॥ ३ ॥

## विलंबिकालक्षणम् ।

ऊर्द्ध्वं त्वधो याति न दुष्टमन्नं विलंबिका सा भृशदुश्चिकित्स्या ॥ ४ ॥

## विषूचिकालक्षणम् ।

सूचीभिरङ्गानि च विध्यतीव वायुस्तु यस्यां हि विषूचिका सा ॥ अथालसे वांतिरतिप्रशस्ता विषूचिकायां खलु कार्ष्णिदाहः ॥ ५ ॥

## अजीर्णोपचारः ।

उपोषणं सैन्धवकुष्ठचुक्रैस्तैलान्वितैर्मर्दनमत्रशस्तम् ॥ विषूचिकाद्याहरतैलमेतच्छुक्राख्यनामा मुनिभिः कृतोयम् ॥६॥ यवं पिष्टं यवक्षारं लेपस्तक्रेण संयुतः॥ उष्णीकृतोहरेत्सद्यो जठराऽर्तिं सुदुर्जयाम् ॥ ७ ॥ अर्द्धशृतं लवंगाम्बु पिपासायां प्रशस्यते ॥ ८ ॥

## चूर्णम् ।

शाणद्वयं चाथ लवंगमेलाजातीफलं कोलसुनाग-

१ एण्डी–पाचके तलवाका दाह । २ तिनपतिया–चुक्रा ।

फेनम् ॥ प्रत्येकमाषं सकलं विचूर्ण्य शाणं कवोष्णेन ज़लेन पीतम् ॥ ९ ॥ विषूचिकां हन्ति सुदारुणां च शूलाऽतिसारौ वमथुं[१] प्रसक्ताम् ॥ १० ॥ कटुत्रिकं जीरकहिंगुसिंधूरसोनगन्धं च समं विचूर्ण्य ॥ निम्बूद्रवेणाशु निहन्ति चूर्णं विषूचिकां दुष्टविलम्बिकां च॥ ११॥

## अथाऽजीर्णकण्टकरसः ।

शुद्धसूतविषगन्धकं समं तुल्यभागमरिचं सुचूर्णितम् ॥ मर्दयेत्तु बृहतीफलोद्भवैरेकविंशति ( २१ )-विभावितं पुनः ॥ १२ ॥ गुंजिकात्रयमिदं सुभक्षितं सद्य एव जठराग्निदीपनम् ॥ एष कण्टकरसो विषूचिकां जीर्णमारुतगदान्निहन्ति च ॥ १३ ॥

## अथ लेपः ।

आलिप्य जठरं स्वप्याद्धिंगुत्र्यूषणसैन्धवैः ॥ दिवसे भोजनादर्वाक् सर्वाजीर्णविनाशनम् ॥ १४ ॥ विलम्बिकायामलसे क्रियेयं परिकीर्तिता ॥

## अजीर्णलक्षणम् ।

ग्लानिर्बंधः प्रवृत्तिर्वा सामान्याऽजीर्णलक्षणम्॥१५॥

## जीर्णाहारलक्षणम् ।

पिपासा क्षुच्च लघुता जीर्णाहारस्य लक्षणम् ॥

---

१ वमथु । जी. मचलाना । मतळी ।

## भस्मकलक्षणम् ।

क्षणाद्भुक्तं भवेद्भस्म स रोगो भस्मकः स्मृतः॥१६॥

## पायसयोगः ।

अपामार्गस्य बीजानि पिष्ट्वा क्षीरेण साधयेत् ॥ तत्पायसं महाघोरे भस्मके सम्प्रशस्यते ॥ १७ ॥ इति अजीर्णलक्षणचिकित्सितम् ।

## अथ कृमिलक्षणचिकित्सा ।

बाह्याऽभ्यन्तरभेदेन कृमयो द्विविधा मताः ॥ बाह्या मलोद्भवा ज्ञेया यूकालिक्षाश्च नामतः ॥ १८ ॥ अभ्यन्तराः स्मृताः श्लेष्मरक्तविड्जन्मभेदतः ॥

## कृमिनिदानम् ।

अजीर्णान्मधुराम्लानां सेवनात्पिष्टभोजनात् ॥ अव्यायामादिवास्वापाद्विरुद्धाल्लभते कृमीन् ॥ १९ ॥ ज्वराऽतिसारभ्रमशूलभक्तद्वेषाः प्रसेको हृदयामयश्च ॥ वैवर्ण्यसंगे वमिरंगसादो जातं कृमीणामिदमेव चिह्नम् ॥ २० ॥ मुस्ताखुपर्णीत्रिफलासुरद्रुःशिग्रूद्भवः क्काथवरो निपीतः ॥ जयेत्सकृष्णकृमिशत्रुचूर्णः कृमीन्समग्रान्कृमिजांश्च रोगान् ॥ २१ ॥ विडंगसिन्धूद्भवहिंगुपथ्याकम्पिल्लसौवर्चलपिप्पलीनाम् ॥

१ जलउरणी ।

चूर्णं कवोष्णोदकसंगृहीतं कृमीन्निहन्यादरुचिं वमिं च ॥२२॥विडंगानां तु चूर्णं च कर्षार्द्धं कर्षमेव च॥ मधुना सहितं लिह्यात्कृमिकोटिनिवृत्तये ॥ २३ ॥ पारसीकां यवानीं तु पर्णेन सह भक्षयेत् ॥ कृमिजालं निहन्त्याशु पीतो निंबरसोऽथवा ॥ २४ ॥ पारदेन समायुक्तो रसः कनकपत्रजः ॥ ताम्बूलपत्रजो वापि लिप्तो यूकाविनाशनः ॥ २५ ॥

## अथ कृमिनाशनधूपः ।

ककुभपुष्पविडंगकलांगलीमदनचन्दनसर्जरसास्तथा॥नलदकुष्ठमरुष्करमित्ययं जयति धूपवरो मशकान्कृमीन् ॥२६॥ मुंडिका[1]धूपमात्रेण मशकान्नाशयेद्ध्रुवम् ॥ तथा सिंसपपत्रेण लेपाद्यूका प्रणश्यति ॥२७॥

## अथ पांडुरोगलक्षणचिकित्सा ।

पृथक्सर्वैर्मृदा दोषैः पांडुरोगस्तु पंचधा ॥ मृद्वम्लमद्यलवणादिवास्वापाद्व्यवायतः ॥ २८ ॥ संदूष्य रुधिरं दोषाः कुर्वते पांडुतां त्वचः ॥ त्वङ्मूत्रनयनादीनां पीतता प्रथमं भवेत् ॥ २९ ॥ वातात्कंपभ्रमाऽनाहः पित्ताद्दाहश्रमक्लमाः ॥ कफात्प्रसेकः श्वयथुस्त्रिभिर्दोषैर्हतप्रभः ॥ ३० ॥

---

१ मुंडीबूटी । २ सरीफा । ३ क्लम–अर्थात् पित्तश्वास–पित्तके उभाडते श्वास होजाय। ४ अतिगर्मी । ५ श्वयथु–सूजन ।

## अथ मृद्भक्षणे पांडुरोगः।

मृद्भक्षणादक्षिशोफबलवर्णाऽग्निसादनम्[1] ॥ सर्वेषु पाण्डुरोगेषु पथ्याचूर्णं घृतप्लुतम् ॥ ३१ ॥ स्निग्धो विधिर्वातभवे प्रशस्तस्तिक्तः सुशीतः किल पित्तजाते ॥ कफात्मके रूक्षकटूष्णतिक्तः प्रोक्तो विमिश्रस्त्रिमलोद्भवे स्यात् ॥ ३२ ॥

## अथ मोदकः।

अयस्तिलास्त्रिकटुकं कोलं सर्वं विचूर्णयेत् ॥ सर्वैस्समं माक्षिकस्य भागं दत्त्वा विमर्दयेत् ॥३३॥ मोदकोमधुसंयुक्तः सतक्रः पाडुतां जयेत् ॥

## घृतम्।

क्षणदाक्काथकल्काभ्यां घृतं सिद्धमिमं जयेत् ॥ ३४ ॥

## अथ कुम्भकामला।

यः पांडुरोगी भृशपित्तलानि संसेवते तस्य विदूष्य पित्तम् ॥ मांसासृजो संदहते नरस्य स्यात्कामला तेन च कुम्भकाह्वा ॥ ३५ ॥

## तत्रौषधम्।

पिबेत्कवोष्णेन जलेन तिक्तां सशर्करां पाणितलप्रमाणाम् ॥ निहंति दुष्टामतिकामलां सा हरीतकी

---

[1] सादन—गृह।

वा मधुना प्रयुक्ता॥ ३६ ॥ दार्वीरसो वा त्रिफलारसो वा छिन्नोद्भवो निंबभवो रसो वा ॥ प्रातर्निपीतो मधुसंप्रयुक्तो हन्यात्प्रवृद्धामपि कामलां स्यात् ॥ ३७ ॥

## अथायसादिचूर्णम् ।

अयोरजोदारुनिशाहरिद्राफलत्रिकाढ्या कटुरोहिणी च ॥ प्रलिह्य चूर्णं घृतमाक्षिकाभ्यां स कामलार्तस्त्वरितं सुखी स्यात् ॥ ३८ ॥ निशागैरिकधात्रीणां चूर्णं तूर्णं प्रयोजयेत् ॥ कामलारोगनाशाय द्रोणपुष्पीरसोञ्जनात् ॥३९॥ व्योषं विडंगं त्रिफलादार्वीकृष्णमयोरजः॥लिह्यात्क्षौद्रघृताभ्यक्तं कामलारोगनाशनम्४०॥

## आरिष्टम् ।

पांडुदन्तनखनेत्रमलो यः पाण्डुसंहतिमतीव तु पश्येत् ॥ आशु तस्य मुनिभिर्मृतिरुक्ता शूलनाभिगुदशोफस एव ॥ ४१ ॥

## अथ पथ्यः ।

शाल्यन्नयवगोधूमा रसा जांगलजा हिताः ॥ मुद्गाऽढकीमसूरादि भोजने वा प्रशस्यते ॥ ४२ ॥

इति श्रीमदनन्तभट्टसुतशंकरभट्टविरचिते वैद्यविनोदेऽजीर्णकृमिपांडुरोगलक्षणयत्नेकथनं नाम तृतीयोल्लासः ॥ ३ ॥

---

१ कांतिसारलोहेका भस्म । २ गूमा । ३ लोहभस्म ।

## अथ रक्तपित्तलक्षणम् ।

व्यायामशोकातपमार्गमैथुनैस्तीक्ष्णोष्णकटम्लसुरा-ऽतिसेवनैः ॥ पित्तं विदग्धं स्वगुणैर्दहत्यसृक्तं दुष्टमूर्द्धं व्रजति त्वधो भृशम् ॥ १ ॥

## रक्तपित्तलक्षणम् ।

ऊर्ध्वं तु नासामुखनेत्रकर्णैरधोगतैः स्याद्गुदयोनि-मेढ्रैः ॥ तथा समस्तैरपि रोमकूपैस्तद्रक्तपित्तं मुनिभिः प्रदिष्टम् ॥ २ ॥ शीताऽभिलाषः सदनं च कण्ठे धूमा-यनं वांतिरतीव तस्मिन् ॥ श्यावाऽरुणं फेनिलरूक्षमस्रं वातात्कफात्पिच्छिलपांडुसान्द्रम् ॥ ३ ॥ पित्तेन पीतं तत्तु नीलमस्रं सर्वात्मकं सर्वगुणोपपन्नम् ॥ ४ ॥

## उपचारः ।

ऊर्ध्वगे प्रथमतो हि विरेकोऽधोगते तु बलिनां वमि-रेव ॥ पथ्यया त्रिफलया त्रिवृता वाऽरग्वधेन विहितो हि विरेकः ॥ ५ ॥दाडिमाऽमलकनिम्बुपटोलं तंडुलीय-कलावसशोर्णाः ॥ शालिषष्टिकमकुष्टमसूरा मुद्गको-द्रवरसा इह शस्ताः ॥ ६ ॥

---

१ गोरा पक्षी । २ शोगा—लाल पक्षी । ३ मोथी या मोठ ।

## अथ ह्रीबेरादिक्काथः ।

ह्रीबेरमुत्पलमुशीरवृषौ गुडूची षष्टीमधूकघनचन्दन-धान्यकानि ॥ क्वाथः सितामधुयुतो जयति प्रसह्य चोध्व त्वधः प्रकुपितं खलु रक्तपित्तम् ॥७॥ प्रियंगुलोध्रांऽजन-मृत्तिकानां चूर्णं नियुक्तो वृषजः कषायः ॥ पीतः सिता-क्षौद्रयुतो रसो वा निहन्ति पित्तास्त्रमुदीर्णवेगम् ॥ ८ ॥ घ्राणप्रवृत्तेऽसृजि नस्यमुक्तं दूर्वारसो दाडिमपुष्पजो वा॥ अलक्तकस्यापि रसः प्रयोज्यः पथ्यारसः शीतजलेन नस्ये ॥ ९ ॥

## अथ लेपः ।

मृद्दूर्वामलकं पिष्ट्वा श्लक्ष्णं मूर्ध्नि प्रलेपयेत् ॥ नासाप्रवृत्तं रुधिरं तेन शाम्यति तत्क्षणात् ॥ १० ॥ नारिकेलपयःपानं दुग्धमाजं सितायुतम् ॥ वासकः स्वरसः पीतः रक्तपित्ते प्रशस्यते ॥ ११ ॥

## अरिष्टम् ।

यश्छर्दयेदस्रमजस्रवांतिः श्रोणेक्षणः शोणितसर्व-दर्शी ॥ पश्येन्नभः शोणितमेव सर्वं स रक्तपित्ती म्रियते ध्रुवंतु ॥ १२ ॥ देवदानवगंधर्वग्रस्ते वै रक्तपित्त-कृत् ॥ कुलेष्टदेवताग्रस्ते रक्तपित्ते महद्भयम् ॥ १३ ॥ कुलेष्टदेवताऽभ्यर्च्या दानवादिबलिस्तथा ॥ होममंत्र-त्रिनेत्रादिबलिभिस्स सुखी नरैः ॥ १४ ॥

## अथ राजयक्ष्मलक्षणम् ।

वेगाऽवरोधाद्विषमाऽशनाच्च क्षयात्तथा साहसकर्मणश्च ॥ यक्ष्मा गदो हेतुचतुष्टयात्स्यात्कफप्रधानैः सकलैस्तु दोषैः ॥ १५ ॥ मार्गेषु रुद्धेषु रसस्य वीर्ये क्षीणेग्निमांद्यादतिमैथुनाच्च ॥ यांति क्षयं धातव एव सर्वे दिनेदिने शुष्यति मानवोऽत्र ॥ १६ ॥

## पूर्वरूपम् ।

श्वासकासमदपीनसनिद्रातालुशोषकफसंस्रवसादाः ॥ सम्भवन्ति हि भविष्यति शोषे मानवो रतरतिः सितनेत्रः ॥ १७ ॥ पार्श्वांसतापः करपादयोश्च तापो ज्वरः सर्वशरीरगः स्यात् ॥ मन्दाऽग्निता छर्दनमत्र लिंगं तद्रोगराजस्य भिषग्भिरुक्तम् ॥ १८ ॥

## राजरोगः ।

स्वरभेदो ज्वरः श्वासः कासो रुधिरदर्शनम् ॥ भक्तद्वेषश्च जायेत षडेते राजयक्ष्मणि ॥ १९ ॥ स्वरभेदोऽनिलाच्छूलं पित्ताद्रुधिरनिर्गमः ॥ अतीसारो ज्वरो दाहः कफात्कासोऽतिगौरवम् ॥ २० ॥ उरोव्यथा शोणितवांतिपृष्ठकटिग्रहाः कासगदाः क्षतक्षये ॥ २१ ॥

## उपचारः ।

गोधूममुद्गयवशालिकषष्टिकाद्या मद्यं रसा हरिणजांगलपक्षिमांसम् ॥ शुंठीकुलत्थयवपिप्पलिदाडिमैश्च धात्रीघृतैर्विहितमाजरसं पिबेत्तु ॥ २२ ॥ धान्यविश्वदशमूलकणाभिः क्वाथ एष किल यक्ष्मगदघ्नः ॥ पार्श्वशूलकसनज्वरदाहश्वासपीनसनिवर्तनयोग्यः ॥ २३ ॥

## मांसयोगः ।

श्लक्ष्णचूर्णीकृतं छागमृगमांसं हितं सदा ॥ अजाक्षीरेण पीतं स्यात्क्षयरोगनिवारणम् ॥ २४ ॥ कपिमांसं तथा पीतं क्षयरोगहरं परम् ॥ दशमूलबलारास्नाकषायः क्षयनाशनः ॥ २५ ॥ छागमांसं छागसर्पिः सविश्वं छागदुग्धकम् ॥ छागसेवा सुषुप्तिश्च एवं यक्ष्म हरेद्ध्रुवम् ॥ २६ ॥

## छागसेवनं पुनः ।

छागं मांसं छागसर्पिः सविश्वं छागं दुग्धं छागसेवा सुषुप्तिः ॥ एवं नाशो जायते यक्ष्मणस्तु कासश्वासच्छर्दनैः संयुतस्य ॥ २७ ॥

## फलत्रिकाद्यवलेहः ।

फलत्रिकं व्योषयुतं शतावरी पृथक् पलं लोहरजो विचूर्णितम् ॥ तत्कर्षमात्रं मधुनाऽवलेहितं वक्षःक्षतं हंति कुकण्ठवेदनाम् ॥ २८ ॥

## विडंगादिलोहः।

विडंगलोहाश्मजतुप्रपथ्याचूर्णं घृतक्षौद्रयुतं निहन्यात् ॥ यक्ष्माणमुग्रं कसनादियुक्तं सितामधुभ्यां नवनीतलेहः ॥ २९॥ संशोषितं सूर्यकरैर्हि मांसं पारावतं यः प्रतिवस्रमस्ति ॥ सर्पिर्मधुभ्यां विलिहन्नरो वा निहंति यक्ष्माणमतिप्रगल्भम् ॥ ३० ॥ छागक्षीरेण संसिद्धं पिप्पलीगुडसंयुतम् ॥ एतदग्निकरं सर्पिः क्षयकासेषु शस्यते ॥ ३१ ॥

## अन्ययोगः।

दौर्बल्यज्वरसन्तापैस्तैलं लाक्षादिकं हितम् ॥ सघृतान् राजमाषान्यो नित्यमश्नाति मानवः ॥ ३२ ॥ तस्य क्षयः क्षयं याति सूत्रमेहोपि दारुणम् ॥

## सितोपलाचूर्णम्।

त्वगेला पिप्पली वासा रोचना च सितोपला ॥३३॥ यथोत्तरं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ एतच्चूर्णं निहन्त्याशु क्षयरोगं सुदारुणम्॥३४॥ मुस्ताऽश्वगंधाऽतिविषापुनर्नवाश्रीपर्णिपाठाबहुपुत्रिकाबलाः ॥ सत्त्सैकाचूर्णमिदं सुसेवितं दुग्धेन हंति श्वसनं क्षतक्षयम् ॥३५॥सुस्विन्नवासकव्याघ्रीरसो मधुकणान्वितः॥ रोगराजं निहंत्याशु श्वासं कासं च दारुणम् ॥ ३६ ॥

१ इन्द्रजौकी छाल-खोरया।

## अथ कुमुदेश्वररसः ।

हेमभस्मरसभागसमानं मौक्तिकं किल तयोः समभागम् ॥ टंकणं रससमं वलिभागं कांजिकेन सकलं परिमर्द्यम् ॥ ३७ ॥ गोलं विधायाथ मृदावलिप्य संशोष्य भांडे लवणाऽभिपूर्णे ॥ दिनं पचेत्तेन भवेद्धि सिद्धो नाम्ना प्रसिद्धः कुमुदेश्वरोऽयम् ॥ ३८ ॥ प्रयोजयेदस्य घृतोषणाभ्यां वल्लं सकासक्षयरोगशान्त्यै ॥ महाशनो मेहयुतोऽतिसारी संक्षीयमाणो भृशशुक्रनेत्रः ॥ ३९ ॥

## अरिष्टः ।

यः शूनमुष्फोदरपाणिपादस्तं यक्ष्मिणं श्वासयुतं प्रजह्यात् ॥

## वर्ज्यावर्ज्यम् ।

क्रोधं स्त्रियं शोकमसत्प्रलापं त्यजेदुदारान्विषयान्भजेच्च ॥ ४० ॥ तथा द्विजातीनतिथीन्गुरूंश्च पुण्यां कथां वा शृणुयाद्द्विजेभ्यः ॥ ४१ ॥

## अथ कासश्वासलक्षणम् ।

धूमाभिघाताद्रजसो व्यायामाद्रूक्षभोजनात् ॥ विमार्गगत्वादन्नस्य क्षवथोश्च विधारणात् ॥ ४२ ॥

१ रस-पारा ।

निरेति वक्राद्दुष्टःसन् स कासो मुनिभिर्मतः ॥ कासाः पंचविधा वातपित्तश्लेष्मक्षतक्षयैः ॥ ४३ ॥

## वातकासपूर्वरूपलक्षणम् ।

कंठे कंडूर्भोज्यरोधस्तु पूर्वं वाताच्छुष्कं कासते भिन्नघोषः ॥

## पित्तकासलक्षणम् ।

पित्ताद्दाहो वक्त्रशोषो ज्वरः स्यात्कासेत्पीतं नीलतिक्तं वमेद्वै ॥ ४४ ॥

## कफकासलक्षणम् ।

कफेन वक्त्रं परिलिप्यमानं कासेद्भृशं सान्द्रकफः शिरोऽर्तिः ॥

## क्षतकासलक्षणम् ।

क्षतोद्भवात्कासति शुष्कमादौ ष्ठीवेत्ततोसृग्ज्वरशूलयुक्तः ॥ ४५ ॥

## अथासाध्यक्षयकासः ।

शूलदाहज्वराऽनाहमूर्च्छाःस्युःक्षयजाततः ॥ शुष्कं ष्ठीवति रक्तं वा दुश्चिकित्स्यो भृशं नरः ॥ ४६ ॥

## अथ कासोपचारः ।

[1]ग्राम्योदकानूपरसैः समांसैः स्नेहैस्तथा बस्तिभिर-

---

१ छींक ।

न्नपानैः ॥ उपाचरेन्मारुतकासमादौ गोधूमशाल्यन्नयवा हिताश्च ॥ ४७ ॥

## शठ्याद्यवलेहः ।

शठीकणावारिद्यासभार्ङ्गीशुण्ठीगुडैः संविहितोऽवलेहः ॥ सतैलयुक्तोऽनिलकासहन्ता वा पंचमूलीशृतमम्बु हन्ति ॥ ४८ ॥

## पित्तकासोपचारः ।

वलासवासा बृहतीद्वयं च द्राक्षा च सर्वैर्विहितः कषायः ॥ सितोपलामाक्षिकसंप्रयुक्तः पित्तोद्भवं कासमपाकरोति ॥ ४९ ॥

## कफकासोपचारः ।

(श्वासे)–त्रिसप्त७३दिवसाल्लीढं कटुतैलेन संयुतम्॥ जीर्णं गुडं हरेच्छ्वासं दुःसाध्यं सुचिरोत्थितम् ॥ ५० ॥ कट्फलाऽमरसुगंधितृणाढ्यःशृंगिपर्पटकविश्ववचाँश्च ॥ धान्यकं भृगुभैषा विर्जेया च क्वाथ एष कफकासगदघ्नः ॥ ५१ ॥ मूर्वाञ्जने वह्निकणाहरिद्रापाठासमंगाः सकलं विचूर्ण्य ॥ कासे क्षतोत्थे मधुना विलिह्याद्घृतं पिबेच्चेक्षुरसे विपक्वम् ॥ ५२ ॥ कणालाक्षाबृहतिकाफलं पक्वं च पद्मकम् ॥ क्षौद्रसर्पिर्युतो लेहः क्षयकासहरः

१ देवदारु । २ सुगंधवाला । ३ भारंगी । ४ भांगभूजिके ।

परम् ॥ ५३ ॥ कणाशठीपुष्करमूलपथ्याशुंठीघनाः सूक्ष्मविचूर्णिताश्च ॥ गुडेन साकं गुटिकाः प्रयुंज्याच्छ्वासेषु कासेषु च दारुणेषु ॥ ५४ ॥ मनःशिलाले मरिचं च मांसी मुस्तेंगुदे चेति समं विचूर्ण्य ॥ धूमं पिबेच्चानुपयः सुखोष्णं गुडेन युक्तं जयतीह कासान् ॥ ५५ ॥ सकृष्णो बृहतीक्वाथःसर्वकासहरः परम् ॥ विभीतककणाचूर्णं मधुना सर्वकासजित् ॥ ५६ ॥ शृंगीव्योषं त्रैफलं पौष्करं च व्याघ्री भार्ङ्गी पंचभागाः पटूनाम् ॥ चूर्णं पीतं कोष्णनीरेण हन्ति कासश्वासाऽरोचकान्पीनसांश्च ॥ ५७ ॥ पंचकोलकसुसाधितं पयः श्वासकासकफतृड्ज्वरापहम् ॥ सैन्धवेन परिपाचिता कणा पानतः श्वसनकासरोगहृत् ॥ ५८ ॥ पिप्पलीमरिचदाडिमचूर्णं यावशूकगुडयुक्तमिहेष्टम् ॥ दारुणे क्षयभवेऽपि कासे श्वासपीनसवमिज्वरमांद्ये ॥ ॥५९॥ क्षीणानां क्षयजः कासः शीघ्रं देहविनाशनः ॥ वृद्धानां च ततः कासः सर्वो याप्यःप्रकीर्तितः ॥ ६०॥

## अथ हिक्कालक्षणम् ।

रूक्षशीतगुरुभोजनपानस्नानभारगतिवेगविघातैः ॥ जायते त्वहितचारिणि हिक्का मानवे श्वसनकासगदश्च ॥ ६१ ॥ उदेति सस्वनो वायुः प्लीहान्त्राणि

१ जल । २ अ.पटां ।

क्षिपन्निव ॥ मुखान्मुहुर्हिनस्त्याशु यत्र हिक्का मता तु सा ॥ ६२ ॥ प्राणावरोधनविसर्जनभर्त्सिकाभिर्विस्मायनैर्बहुलरौद्रकथाप्रयोगैः ॥ नाशं व्रजेद्बहुविधैरपि हेतुभिश्च हिक्कागदोऽनिलवलासहरैर्नराणाम् ॥ ६३ ॥ छागं पयो नागरसाधितं पिबेदम्लान्नसान्सैंधवलाजसक्तुकान् ॥ हिक्कागदे लेह्यमथो मधुप्लुतं शुंठीकणाधात्रीफलोद्भवं रजः ॥६४॥ मक्षिकाशकृतो नस्यं स्तन्यैर्वाऽलक्तकाम्बुना ॥ गुडनागरयोर्नस्यं हिक्काऽघ्नं परमौषधम् ॥ ६५ ॥ कासमूलजरसो मधुमिश्रो लेहितं जयति दारुणहिक्काम् ॥ बर्हिपक्षभवभस्म हितं वा बीजपूररससैन्धवमिश्रः ॥ ६६ ॥ कुमारिकापत्ररसः सविश्वः पीतो हरेत्तत्क्षणमेव हिक्काम् ॥ सपौष्करक्षारमरीचचूर्णमुष्णाम्बुना पीतमतिप्रवृद्धाम् ॥ ६७ ॥ निर्धूमांगारकं क्षिप्त्वा निशामाषरजोभवः ॥ धूमः पीतो निहंत्याशु हिक्कारोगं सुदारुणम् ॥ ६८ ॥ पूर्वं श्वासं च हिक्कायां तैलाक्तस्वेद इष्यते ॥ श्वासघ्नमौषधं यच्च हिक्कायां तत्प्रशस्यते ॥ ६९ ॥

## अथ स्वासकासलक्षणम् ।

महोर्ध्वाच्छिन्नतमकक्षुद्रभेदैस्तु भिद्यते ॥ पंचधा श्वास एकस्तु महारोगोऽतिदारुणः ॥ ७० ॥

## पूर्वरूपम् ।

वैरस्यमास्ये हृदि शंखयोःस्यात्पीडा तथाऽध्मान-मिदं हि पूर्वम् ॥

## सम्प्राप्तिः ।

स्रोतांसि संरुध्य कफेन युक्तः श्वासान्प्रकुर्य्यादनि-लोऽतिरुद्धः ॥ ७१ ॥

## महाश्वासः ।

विभ्रान्तनेत्रो विकृताननः स्याच्छ्वासान्निहन्तो मरणं स याति ॥

## ऊर्ध्वश्वासः ।

श्वासो यदोर्ध्वःकुपितस्तदाऽधः श्वासं निरुध्य प्रतिहन्ति जीवम् ॥ ७२ ॥

## छिन्नश्वासः ।

छिन्नश्वासेन शुष्कास्यो विच्छिन्नो विलपन्नरः ॥ विचेता विप्लुताक्षो यः स शीघ्रं विजहात्यसून् ॥७३॥

## तमकश्वासः ।

आसीन उष्णं लभतेऽतिसौख्यं सुप्तस्य पार्श्वे परि-गृह्य वायुः ॥ आध्मापयेत्तं तमकं वदंति मेघाम्बुशीतैः स हि याति वृद्धिम् ॥ ७४ ॥

१ तारेसे भ्रमण करतेहैं (नेत्र) । २ नेत्र डूबते और तैरतेहैं । ३ वनमांटा ।

## क्षुद्रश्वासः ।

रूक्षाऽन्नपानैरायासैर्वायुःक्षुद्रमुदीरयेत् ॥ क्षुद्रश्वासो मतस्तेन न च दुःखकरो हि सः ॥ ७५ ॥

## श्वासोपचारः ।

कुलत्थसिंहीवृषनागरोत्थं जलं पिबेत्पौष्करचूर्णमिश्रम् ॥ श्वासः शमं यात्यचिरेण तेन कासः सहिक्काऽरुचिपीनसश्च ॥ ७६ ॥ क्वाथो निहन्याद्दशमूलजो वा श्वासं तथा पौष्करचूर्णयुक्तः ॥ कूष्माण्डकस्यापि शिफारजःस्याच्छ्वासघ्नमुष्णेन जलेन पीतम् ॥ ७७ ॥ त्रिसप्ताह १२३ प्रयोगेण गुडसर्षपतैलयोः ॥ लेहः श्वासांजयेच्छीघ्रं कासान्प्राणहरानपि ॥ ७८ ॥ निशोषणे पिप्पलिहारहूरारास्नासठीचूर्णमिदं गुडश्च ॥ तैलेन सार्द्धं विलिहन्निहन्याच्छ्वासान्प्रवृद्धान्कसनादियुक्तान् ॥७९॥ असितकनकबीजान्यत्ति यो मासमेकं श्वसनमतिनिहन्यात्पंचभिर्वर्द्धितानि ॥ मरिचरजनिचूर्णं शर्कराक्षौद्रयुक्तं जयति सकलकासश्वाससमाध्मानमुग्रम् ॥ ८० ॥ शृंगवेररसो वापि मधुना सह सेवितः ॥ आर्द्रकस्वरसो वापि श्वासकासान्निहंति च ॥ ८१ रसस्य भागो बलिरर्द्धभागः कुमारिकापत्ररसेन मर्द्यः ॥ तुल्यं तयोस्ताम्रमयं च पत्रं तेनैव कल्केन

१ पारा । २ गन्धक आमलासार । ३ घीकुआरि ।

विलिप्य पश्चात् ॥ ८२ ॥ मृद्भाण्डयन्त्रे दिनमेकमेतत्सम्पाचयेत्पक्कमिदं विचूर्ण्य ॥ ससूर्यवर्तो रस एष भुक्तो गुंजाद्वयं श्वासगदं निहंति ॥ ८३ ॥ द्रुतं शीताम्बुसेकैश्च साहसक्रूरदर्शनैः ॥ हर्षणक्रोधसंत्रासैः हिक्कां श्वासं निवारयेत् ॥ ८४ ॥

इति श्रीगौडवंशाऽवतंसश्रीमदनन्तभट्टात्मजशङ्करविरचिते वैद्यविनोदे रक्तपित्तराजयक्ष्मकासहिक्काश्वासनिदानचिकित्साकथनं नाम चतुर्थोल्लासः ॥ ४ ॥

---

## अथ स्वरभेदनिदानचिकित्सा।

अत्युच्च भाष्याऽध्ययनाऽभिघातविषादिभिः कोपमुपेत्य दोषाः ॥ स्वरावहे स्रोतसि संस्थिताःस्युर्हन्युः स्वरं सोपि च षड्विधः स्यात् ॥ १ ॥ पृथग्वातादिभिःसर्वैर्मेदसा च क्षयेण च ॥ कृष्णनेत्राननो वाताद्भिन्नशब्दःशनैर्वदेत् ॥ २ ॥ पीतनेत्राननः पित्ताद्ब्रूयाद्गलविदाहवान् ॥ कफेन रुद्धकंठस्तु वदेत्स्वल्पं शनैःशनैः ॥ ३ ॥ सर्वात्मके सर्वलिंगःसोऽसाध्यः स्यात्स्वरामयः ॥ धूमायति क्षयाद्वाणी यस्य स क्षयमाप्नुयात् ॥ ४ ॥ ब्रूयाद्ग्धगलोऽव्यक्तं मेदसोंतगतस्वरम् ॥ मेदस्विनां च वृद्धानां स्वरभेदो न सिद्ध्यति ॥ ५ ॥ ( कवल )—वाते सतैललवणःपित्ते ससितमा-

क्षिकः ॥ कफे सक्षारकटुकः क्षौद्रः कवल इष्यते ॥६॥ वाते कोष्णं जलं पेयं भुक्त्वा सर्पिर्गुडौदनम् ॥ पित्ते विरेचनं ग्राह्यं सर्पिश्च मधुरैः स्मृतम् ॥७॥ कणोषणग्रंथिकनागराणां चूर्णं पिबेन्मूत्रयुतं कफोत्थे ॥ फलत्रिकं विश्वकणामरीचं चूर्णं निहन्यात्स्वरभेदमाशु ॥ ८ ॥ दीप्यानिशाचित्रकयावशूकधात्रीफलानां विहितं सुचूर्णम् ॥ सर्पिर्मधुभ्यां विलिहन्मनुष्यो जयेदुदारं स्वरभंगमाशु ॥ ९ ॥ अगरु देवदारुश्च दार्वीक्वाथः हृतस्वरः ॥ तैलाक्तं धारयेद्वक्त्रे खादिरं स्वरसंक्षये ॥१०॥ पथ्याशुंठ्या युता वापि पिप्पली स्वरभंगहृत् ॥ मेदोभवे स्वराघाते कफवद्विधिरिष्यते ॥ ११ ॥ क्षयजः सन्निपातोत्थः स्वरभेदः प्रतिक्रियः ॥ दुग्धमुष्णं पिबेद्रव्यं स्वरभेदे सितायुतम् ॥१२॥ कासे श्वासे च हिक्कायां क्षये प्रोक्तानि यानि तु ॥ वृतानि तानि योज्यानि भिषग्भिस्स्वरसंक्षये ॥ १३ ॥

## अथाऽरोचकनिदानचिकित्सा ।

दोषैः शोकक्रोधमोहाऽतिलोभत्रासैश्चित्तद्वेषिरूपान्नगंधैः ॥ ज्ञेयाः पंचाऽरोचका मारुताद्यैः प्रत्येकं चागन्तुकाः सर्वशस्ते ॥ १४ ॥ कषायवक्त्रः परिहृष्टदन्तो वातात्तु पित्ताल्लवणं च वक्त्रम् ॥ माधुर्य्यपैच्छिल्य-

१ रसिआव–मीठाभात । २ जवाखार । ३ तैलमें मिलाया ।

युतं मुखं स्यात्कफादहृद्याशुचिगंधजाद्यैः ॥ १५ ॥ वैगुण्यमोहाऽतिजड्त्वयुक्तं त्रिदोषजे नैकरसं मुखं स्यात् ॥ आरोचके वातभवे तु वस्तिः पित्ते विरेको वमनं कफोत्थे ॥ १६ ॥ मनोहराणि द्रव्याणि हर्षणं च मनोघ्नजे ॥ त्वगेलामरिचैर्युक्तमम्लीका गुडयोर्जलम् ॥ १७ ॥ आरोचकेषु सर्वेषु प्रशस्तं कवलग्रहः ॥ शुंठीरसश्च मधुना पीतोऽरोचककासहा ॥ १८ ॥ पूर्वं देयं सदा पथ्यं भोजने लवणाऽर्द्रकम् ॥ अग्निसंदीपनं हृद्यं हिक्काकंठविशोधनम् ॥ १९ ॥ पलद्वयं दाडिमबीजचूर्णमष्टौ सिता व्योषपलत्रयंच ॥ त्रिजातकस्यापि पलं प्रयोज्यं चूर्णं प्रकुर्यात्सकलं विमर्द्य ॥ २० ॥ आरोचकं हन्ति सपीनसं च हृद्यं तथा वह्निविवर्धनं तु ॥ २१ ॥

## अथ तालीसादिचूर्णम् ।

तालीसचव्योषणविश्वसैन्धवैस्तुल्यैकभागैः सकणाऽग्निजीरकैः ॥ त्वक्तिंतिडीग्रन्थिकधान्ययुक्तैः रसैस्त्रिभागैर्बदराऽम्लवेतसैः ॥ एलाऽब्ददीप्याससहितैः सुचूर्णितैरंशश्चतुर्थः शुभदाडिमोद्भवः ॥ २२ ॥ सिताऽर्द्धयुक्तो विहितो हि चूर्णो मंदाग्निकासाऽरुचि-

१ ( इलायची । दालचीनी । तेजपात । )

शूलगुल्मान् ॥ दुर्नामकोष्ठोदरवृद्धिकाराञ्जयेदयं खांडवचूर्ण उक्तः ॥ २३ ॥

## ( वमन ) अथ छर्दिनिदानचिकित्सा ।

अतिद्रवैः स्निग्धतरैरहृद्यै रसात्मजातैरपि भोजनैर्वा ॥ कृमिश्रमोद्वेगभयादजीर्णादत्यामदोषाच्च वमेन्नृषार्तः ॥ २४ ॥ वातेन पित्तेन कफेन सर्वैर्बीभत्स्यदौर्गन्ध्यविलोकनाद्यैः ॥ ताश्छर्दयः पंचविधा हि पूर्वं हृल्लासरोधो लवणप्रसेकः ॥ २५ ॥ हृत्पार्श्वतोदैः स्वरभेदकासैर्वाताद्भुतं छर्दयतीह दुःखम् ॥ पित्तात्पिपासाभ्रममोहशोषाः पीतं वमेद्धुष्टतरं सदाहम् ॥ २६ ॥ कफात्प्रसेकाऽरुचिगौरवार्तः स्निग्धं घनं वाल्पतरं वमेन्ना ॥ श्वासप्रमोहाऽरुचिदाहतृष्णा सांद्रोष्णरक्तं वमनं त्रिदोषात् ॥ २७ ॥ छर्द्यां मतं लंघनमेव पूर्वं संशोधनं वा कफपित्तजायाम् ॥ धान्याकविश्वादशमूलसिद्धान्यूषान्रसान्वातहरांश्च दद्यात् ॥ २८ ॥

## अथ सैंधवादिघृतम् ।

सैन्धवेन घृतं पीतं वातवान्तिविनाशनम् ॥ ससैन्धवघृतो हंति मुद्गाऽमलकयो रसः ॥ २९ ॥

---

१ कठोर । २ पीडा । ३ गाढा ।

## अथ यवागू ( हलुवा ) ।

माषमुद्गमसूराणां यवागूर्वायवस्य च ॥ मधुयुक्ता निहन्त्याशु बहुपित्तोद्भवां वमिम् ॥ ३० ॥ तप्तमृद्गोलल्लोष्टोष्णं पिपासायां जलं हितम् ॥ धात्रीरसश्चन्दनेन मधुयुक्तो हरेद्वमिम् ॥ ३१ ॥ क्वाथः पर्पटजो हन्ति मधुयुक्तो वमिज्वरान् ॥ पथ्याचूर्णं क्षौद्रयुक्तं वमिनां सुखदायकम् ॥ ३२ ॥ क्वाथः पर्पटजो निहंति मधुना युक्तो वमिं सज्वरां पथ्याचूर्णमिदं तथा बहुविधाच्छर्दिप्रशसक्तां जयेत् ॥ छिन्नानिम्बपटोलकत्रिफलजक्वाथो निहन्यान्मधुप्रक्षिप्तो नितरां वमिं सकलजां पित्तोत्तरां दुर्जयाम् ॥ ३३ ॥ सिताचन्दनमध्वाढ्यं लीढं वा मक्षिकाशकृत् ॥ लाजसक्तून्पिबेद्वापि मधुसर्पिःसितायुतान् ॥३४॥ विडंगविश्वात्रिफलानतानां चूर्णं निहन्यान्मधुना कफोत्थे ॥ दुरालभाचूर्णमपि प्रशस्तं क्षौद्रेण युक्तं कफवांतिहारि ॥३५॥ मसूरशक्तवः पीताः क्षौद्रदाडिमसंयुताः॥ छर्दिं निवारयत्याशु वातपित्तकफोद्भवाम् ॥ ३६ ॥ तंडुलोदकसंपीता मूर्वाछर्दिसमंतिका ॥ क्वाथो मधुयुतो हंति गुडूच्याः श्रीफलस्य वा ॥ ३७ ॥ एलाऽब्दकेशरं लाजाःसारिवा चन्दनं तथा ॥ कोलमज्जालवंगानि

---

१ वमन ।

कणाचूर्णसितो मधु ॥ ३८ ॥ लीढमेतन्निहन्त्याशु छर्दिन्दोषत्रयोद्भवाम् ॥ ३९ ॥ अश्वत्थवल्कलं दग्ध्वा सद्यो निर्वापयेज्जले॥ तज्जलं पीतमात्रंतु छर्दिं हन्यात्सुदर्जयाम् ॥ ४० ॥ कोलाऽमलकमज्जानो पिप्पली मक्षिकाशकृत् ॥ सितामधुयुतो लीढं छर्दिमाशु व्यपोहति ॥ ४१ ॥ निम्बाऽम्रास्थिविनिर्यूहः सितामधुसमन्वितः ॥ इति छर्दिमतीसारं वैश्वानर इवाहुतिम् ॥४२॥ अतिक्षीणस्य संलग्नां पूयशोणितसंयुताम् ॥ सोपद्रवां चन्द्रिकाकामसाध्यां तां विनिर्दिशेत् ॥ ४३ ॥

## अथ वमनोपद्रवाः ।

तृष्णा श्वासो ज्वरो हिक्का कासो वैस्वर्य्यमेवच ॥ तमको हृद्रदश्चेति ज्ञेया छर्देरुपद्रवाः ॥ ४४ ॥

## अथ तृष्णानिदानचिकित्सा ।

बलक्षयश्रमभयैरत्युष्णैरुपसेवितैः ॥ कुपितं पित्तमूर्द्धंतु वामकृज्जनयेत्तृषम् ॥ ४५ ॥ असकृद्यः पिबेत्तोयं तृप्तिं नैवाऽधिगच्छति ॥ पुनः पुनः कांक्षति तं तृष्णाऽर्दितमथादिशेत् ॥ ४६ ॥ नरस्य पाण्यंघ्रियदूषितेषु स्रोतस्सु दोषैर्भवतीह तृष्णा ॥ दोषैश्च तिस्रः क्षतजा च तृष्णा क्षयामभक्तप्रभवास्तु सप्त ॥ ४७ ॥

---

१ मार्ऊंका मेडा । २ फाद्दा । ३ आग । १ श्वास ।

क्षामं मुखं शंखशिरस्सु शूलं वातोद्भवायां शिशिरप्रवृद्धिः ॥ प्रलापमूर्छाभ्रमशोषदाहाः पित्तात्मिकायां मुखतिक्तता च ॥ ४८ ॥ कफावृतेऽग्नौ किलवाष्परोधात्तृष्णावलासेन भवेद्गुरुत्वम् ॥ आलस्यनिद्रे मधुरत्वमास्ये तयार्दितः शुष्यति चातिमात्रम् ॥४९॥ शोणितस्रावशूलाभ्यां क्षतस्य क्षतजा मताः ॥ क्षयजायां पिबेत्तोयं न शान्तिमधिगच्छति ॥ ५० ॥ आमोद्भवा सर्वलिंगा हृच्छूलाऽग्निवधप्रदा ॥ स्निग्धाऽम्ललवणं भुक्तं सद्यस्तृष्णाकरं मतम् ॥५१॥ तृष्णयोपद्रवाः सप्त श्वासःकासःक्षयो ज्वराः ॥ बहिर्निर्गतजिह्वात्वं मोहो बाधिर्यमेव च ॥ ५२ ॥ सोपद्रवां परिहरेच्चिकित्सेन्निरुपद्रवाम् ॥ तृष्णाप्रवृद्धौ मतिमान्वामयेत्तु कणांबुना ॥ ५३ ॥ वातोद्भवायां तृष्णायां पानान्नं वातनुद्धितम् ॥ स्वर्णरौप्यैरग्नितप्तैर्लोष्टैः कोष्णं जलं तथा ॥ ५४ ॥ पित्ततृष्णापहं शीतं मधुरं तिक्तकं द्रवम् ॥ धान्यकोशीरकाश्मर्यद्राक्षामधुकचंदनम् ॥ ॥ ५५ ॥ शर्करासहितं तोयं पित्ततृष्णापहं पिबेत् ॥ जीर्णभक्तः पिबेद्वापि मधुना तंदुलोदकम् ॥ ५६ ॥ तिक्तं द्रवं कटूष्णं च कफतृष्णाहरं परम् ॥ जीरकार्द्रकशुंठीनां चूर्णं सौवर्चलान्वितम् ॥५७॥ जलप्लुतं हरेत्तृष्णां हृद्यं मेध्यं सुगंधि च ॥ सुशीतं लाजमंडं वा गुड-

क्षौद्रयुतं पिबेत् ॥५८॥ आर्द्रवस्त्रैस्तु शीतैश्च प्राकृतास्तु तृषा जयेत्॥ वृक्षाऽम्लस्य च गण्डूषधारणं मुखशोषहृत् ॥ ५९ ॥ बीजपूरककपित्थदाडिमं लोध्रकं च बदरं परिपिष्टम् ॥ लेपतः शिरसि तत्क्षणमात्रं दाहशोषसहितं तृषां जयेत् ॥६०॥ वटप्ररोहो मधुकं लाजाः कुष्ठं तथोत्पलम् ॥ संचूर्ण्य गुटिका वक्त्रे धृता तृष्णाविनाशिनी ॥ ६१ ॥ रसस्य पानादसृजश्च पीडानिवारणाद्वा क्षतसंभवान्तु ॥ मांसोदकं वा मधुकोदकं वा क्षीरोदकं संजनयेत्क्षयोत्थाम् ॥ ६२ ॥ वचाबिल्वकषायेण जयेदामोद्भवां तृषाम् ॥ गुर्वन्नजामुल्लिखनैर्जयेत्सर्वकृतां तथा ॥ ६३ ॥ रूक्षदुर्बलभीरूणां दुग्धं तृष्णानिवारणम् ॥ तृष्णासुक्ते हि स्निग्धान्ने शमयेत्तां गुडाम्बुना ॥ ६४ ॥ मद्यस्त्रीदाहमूर्छातृट्छर्दिभिः परिकर्षति ॥ पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥ ६५ ॥ तृषार्तो लभते मोहं मोहात्प्राणं विमुञ्चति ॥ तस्मात्सर्वास्ववस्थासु न कचिद्वारि वार्यते ॥ ६६ ॥

## अथ मूर्छानिदानचिकित्सा ।

विरुद्धदुष्टाऽशुचिभोजनस्य क्षीणस्य वेगाऽभिह-

---

१ अभिलेत ।

तस्य पुंसः ॥ बाह्यान्तरेष्विन्द्रियधाम संस्थिता दोषा यदा मूर्छति मानवस्तदा ॥ ६७ ॥ संज्ञावहासु वाताद्यैर्नाडीषु पिहितास्वति ॥ तमोभ्युपैति सहसा नरः पतति काष्ठवत् ॥ ६८ ॥ मोहो मूर्छेति तांविद्याद्विज्ञेया षड्विधा च सा॥ दोषमद्यविषासृग्भिः पित्तन्तासु प्रभुः स्मृतम् ॥ ६९ ॥ हृच्छूलं जृम्भणं संज्ञानाशः पूर्वं प्रजायते ॥ कम्पोंऽगमर्दः कार्श्यं च मूर्छायै वातसंभवे ॥ ७० ॥ तृष्णातापार्दितः पित्ताद्रक्तपीताऽकुलेक्षणः ॥ गुरुता हृदयोल्लासः प्रसेकः कफसंभवे ॥ ७१ ॥ सर्वाऽकृतिः सन्निपातादपस्मार इवापरः ॥ शीघ्रं सा नाशयेत्प्राणांस्तस्माद्यत्नेन साधयेत् ॥ ७२ ॥ रक्तास्तब्धांगदृष्टिःस्यान्मूढोच्छ्वसश्च मूर्छितः ॥ मद्याद्विलापसंयुक्तो नष्टविभ्रान्तमानसः ॥ ७३ ॥ विषात्कम्पो भवेत्तृष्णास्रावो निद्रा तमःक्रमः ॥ वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ ७४ ॥ अत्यन्तं कुपिता दोषाश्चेष्टामाक्षिप्य देहजाम् ॥ सन्नश्यति नरं क्षीणं संन्यासः स हि कथ्यते ॥ ७५ ॥ प्राणैर्वियुज्यते तेन काष्ठीभूतो मृतोपमः ॥ अतः कुर्याद्भिषक्सम्यक्शीघ्रं सद्यःफलां क्रियाम् ॥ ७६ ॥ शीताः प्रलेपाव्यजनाऽनिलाश्च हारावगाहा मणयश्च सेकाः॥

१ वेना, पंखा । २ तलावमें तैरना ।

अन्नानि पानानि च शीतलानि हृद्यानि मूर्छास्वनिवारितानि ॥७७॥ मधुरद्रव्यसंसिद्धं दुग्धं जांगलजा रसाः॥ दाडिमं शाल्यो मुद्गाः पथ्या मूर्छासु सर्वदा ॥ ७८ ॥ जयेदभीक्ष्णं च शिरो विरेकैर्नस्यैस्सुतीक्ष्णैर्वमनैस्तथान्यैः ॥ क्षुद्रामृतग्रंथिकनागराणां मूर्च्छां जयेद्वारुणकां कषायः ॥ ७९ ॥ कोलमज्जोपणोशीरकेसरं शीतवारिणा ॥ पीतं मूर्च्छां जयेल्लीढा कृष्णा वा मधुसंयुता ॥ ८० ॥ ग्रंथांतरादेकश्लोकः ।

पंचमूलकषायं च मधुना सितया पिबेत् ॥ ज्वरघ्नाश्च कषायाश्च तान्यथास्वं प्रयोजयेत् ॥८१॥ रक्तजायां च मूर्च्छायामयमेव क्रियाविधिः ॥ पिबेन्मद्यं मद्यजायां विषघ्नं विषजासु च ॥ ८२ ॥ धूमांजनप्रधमनान्यवपीडसूचीनिस्तोददाहकचलोमविलुंचनानि॥ संदंशनानि दशनैः कपिकच्छुवर्षश्चैतद्धितं सकलमोहविनाशनाय ॥ ८३ ॥ दुरालभाकषायं तु सघृतं भ्रमशान्तये ॥ धात्रीरसेन सिद्धं वा सर्पिः कल्याणकं पिबेत् ॥ ८४ ॥

इति श्रीगौडवंशाऽवतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे स्वरभेदाऽरोचकच्छर्दितृष्णामूर्छाकथनं नाम पंचमोल्लासः ॥ ५ ॥

## अथ मदात्ययनिदानचिकित्सा ।

मद्यं तु विषवज्ज्ञेयं युक्तियुक्तं रसायनम् ॥ उभयोर्मोहहेतुत्वादयुक्त्या रोगकारकम् ॥ १ ॥ स्निग्धैस्तदन्नैर्विविधैश्च भक्ष्यैर्मांसैः प्रहृष्टेन च सेव्यमानम् ॥ तेजो बलं विक्रमचित्ततुष्टिः प्राकाम्यतायुर्बलमादधाति ॥ २ ॥ निरन्नं सेव्यमानं तद्विकारान्कुरुते बहून् ॥ पानाजीर्णं परमदमत्ययं प्राणविभ्रमम् ॥ ३ ॥

### वातमदात्ययः ।

पार्श्वशूलशिरःकंपहिक्काश्वासप्रजागरैः ॥ विद्याद्बहुप्रलापेन वातप्रायं मदात्ययम् ॥ ४ ॥

### पित्तमदात्ययः ।

दाहज्वराऽतिसारैश्च पित्तप्रायं मदात्ययम् ॥

### कफमदात्ययः ।

तन्द्रागौरवहृल्लासच्छर्दिभिः श्लैष्मिकं तथा ॥ ५ ॥

### त्रिदोषमदात्ययः ।

सर्वलिंगैस्त्रिदोषोत्थो विज्ञेयस्तु मदात्ययः ॥

### पानाजीर्णम् ।

आध्मानं वमनं दाहः पानाजीर्णस्य लक्षणम्॥६॥

## परममदः ।

कंपोंगगुरुता तंद्रा तृष्णा परमदस्य च ॥ पित्तप्रकोपजनितं लक्षणं तन्मदात्यये ॥ ७ ॥

## पानविभ्रमः ।

द्वेषोन्नमद्ययोर्दाहः छर्दिः स्यात्पानविभ्रमे ॥ मूर्छा कफस्य संस्रावो हृदि रुग्गात्रवेदना ॥ ८ ॥

## अथ मद्यपानविकारः ।

शोकोष्णतप्तेन बुभुक्षितेन क्रुद्धेन चित्तेन पिपासितेन ॥ व्यायामभाराध्वहतेन मद्यं पीतं विकाराञ्जनयेद्धि घोरान् ॥ ९ ॥

## अथौषधम् ।

रुचकव्योषसंयुक्तं मद्यं किंचिज्जलान्वितम् ॥ जीर्णे मद्ये तु दातव्यं वातपानात्ययापहम् ॥ १० ॥ अम्लस्निग्धोष्णलवणा रसा जांगलजाः शुभाः ॥ पानकानि च मद्यानि हन्युर्वातमदात्ययम् ॥ ११ ॥ पित्तोत्थे तु हितं मद्यं मधुरौषधिसाधितम् ॥ उल्लिखेदथवा मद्यं पिबेत्क्षुरससंयुतम् ॥ १२ ॥ मद्यं मृद्वादिकं पेयं पित्ते क्षौद्रसितायुतम् ॥ पानात्यये कफोत्थे तु वमनं लंघनं हितम् ॥ १३ ॥ यवान्नविकृतिर्मुद्गा रसा

१ गर्मी । २ उल्लिखेत्–विन्यासकरे ।

जांगलजा हिताः ॥ सर्वज्ञभिषजा सर्वमेतत्कार्यं चिकित्सितम् ॥ १४॥ कुर्यात्क्षीरप्रयोगन्तु त्यक्त्वा मद्यं क्रमेण च ॥ त्रिफला मधुना योज्या रात्रौ प्रातर्गुडार्द्रकम् ॥ १५ ॥ सौवर्चलं जीरकमम्लवेतसं सतिंतिडीकं सममर्द्धभागम् ॥ एलोषणं त्वक्च सितासमानं चूर्णं निहन्यान्मदिराविकारान् ॥१६॥ पानेऽजीर्णे भजेन्मद्यमत ऊर्ध्वं विमार्गगे ॥ मंदकोद्रवजं हन्ति कूष्मांडकरसो गुडः ॥१७॥ मेषीदुग्धं सितायुक्तं हन्ति धत्तूरजं मदम् ॥ पूगीफलमदं हन्यादातृप्तेर्वारि शीतलम् ॥१८॥ वन्यं करीषाघ्राणाद्वा सितालवणभक्षणात् ॥ शर्कराकवलो हन्ति दुःसहां चूर्णजां रुजम् ॥ १९ ॥ सशर्करं घृतं हन्ति गन्धमद्योद्भवं नृणाम् ॥ मदमूर्छापहं वापि सर्पिः कल्याणकं पिबेत् ॥ २० ॥

## अथ दाहनिदानचिकित्सा।

प्राप्य त्वचमपानोष्मा पित्तशोणितमूर्छितः ॥ घोरं संजनयेद्दाहं भेषजं तत्र पित्तवत् ॥ २१ ॥ लेपयेच्छतधौतेन घृतेन यवसक्तुभिः ॥ धात्रीदाडिमयुक्तैर्वा तथा चन्दनसूक्तकैः ॥ २२ ॥ आरनालार्द्रवस्त्रेण च्छादयेच्च कलेवरम्॥तृष्णादाहोपशान्त्यर्थं पाययेच्छिशिरं जलम् ॥ २३ ॥ सर्वदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ॥ ताम्रनेत्रश्च ताम्राभो वह्निनेव च कीर्यते ॥२४॥

तस्य शाखाश्रयां ज्ञात्वा रोहिणीं व्यधयेच्छिराम् ॥ द्रोणीं विगाहयेत्पूर्णां चन्दनोशीरवारिणा ॥ २५ ॥ निकृष्य वपते जिह्वां शुष्कतालुगलोष्ठकः ॥ पाययेच्छीतमंमस्तं शर्कराम्बु पयोऽथवा ॥ २६ ॥ शय्या पद्ममृणालपत्ररचिता नारी मनोहारिणी वापी शीतजला हिमा व्यजनजा वाता जलस्राविणः ॥ हाराश्चन्दनचर्चिताः कलरवा बाला गृहाः शोभनाः क्षीरं मांसरसा हिता बहुविधाश्चान्येपि दाहार्दिते ॥ २७ ॥ पित्तज्वरसमा कार्या चिकित्सा तु भिषग्वरैः ॥ वर्जनीया प्रयत्नेन शीतगात्रस्य देहिनाम् ॥ २८ ॥

## अथोन्मादनिदानचिकित्सा ।

उन्मार्गसंस्थिता दोषाः कुपिता मदयंति यत् ॥ ज्ञेयोऽयं मानसो व्याधिरुन्माद इति कीर्तितः ॥ २९ ॥ दोषैः पृथक्समस्तैश्च दोषेण मानसेन च ॥ विषेण षड्विधो ज्ञेयो यथास्वं तत्र भेषजम् ॥ ३० ॥ विरुद्धाऽशुचिदुष्टान्नभोजनाद्धर्षणाद्गुरोः ॥ भयान्मनोविघात्ताच्च विषमाचरणादपि ॥ ३१ ॥ दोषाः प्रदुष्टा हृदयं प्रदूष्य पुरुषस्य च ॥ चेतः प्रदूषयंत्याशु स्रोतस्सु समधिष्ठिताः ॥ ३२ ॥

---

१ नस्तर । २ कठौतेमें–गहरे पात्रमें ।

## अथ पूर्वोन्मादलक्षणम् ।

शून्यं चेतो विभ्रमः स्याच्च बुद्धेर्धैर्यत्यागो बद्ध-वाक्यं प्रलापः ॥ नेत्रेऽस्त्यर्थं व्याकुले संभवेतामेतच्चिह्नं पूर्वमुन्मादरोगे ॥ ३३ ॥

## अथ वातोन्मादः ।

अस्थाने स्मृतिहास्यभाष्यगणना वांगस्य विक्षे-पकः उन्मादे पवनात्मके बहुविधा भावा प्रनृ-त्यादयः ॥

## अथ पित्तोन्मादः ।

दाहस्तर्जननग्नभावबहुलाऽलापाश्च कायोष्णताकां-क्षा शीतजलाशनेप्यतितरां तृद्पित्तता पैत्तिके ॥३४ ॥

## अथ कफोन्मादः ।

नारीविविक्तप्रियताऽग्निमान्द्यं निद्रा वमिः श्लेष्म-भवे च लालाः ॥

## त्रिदोषोन्मादः ।

सर्वाणि रूपाणि भवन्ति यत्र तत्सन्निपातप्रभवो-तिघोरः ॥ ३५ ॥

---

१ एकान्तमें ।

## हान्योन्मादः ।

चौरैर्नरेन्द्रैररिभिस्तथान्यैर्वित्रासितस्य क्षयतो धनानाम् ॥ गाढं क्षते चेतसि रंतुमिच्छोर्जायेत नूनं मनसो विकारः ॥ ३६ ॥

## विषोन्मादः ।

ब्रवीति चित्रं च मनोगतं यद्धसत्यतो रोदति चातिमूढः ॥ विषोद्भवस्स्याद्बलवाग्विहीनः श्यावाननो रक्ततरेक्षणश्च ॥ ३७ ॥

## अथ यत्नः ।

पूर्वं योज्यं वातिके स्नेहपानं पित्तोद्रिक्ते रेचनं क्षीरपानम् ॥ वांतिं सम्यक् श्लेष्मके वापि बस्तिः कार्यं तद्वत्खल्वपस्माररोगे ॥ ३८ ॥ गुडेन कर्षभागं च चांगेरीरसकांजिकम् ॥ क्रमेण मथितं पीतमुन्मादग्रहशान्तये ॥ ३९ ॥ रसं वा ज्वालशाखायाः[1] पिबेदुन्मादशान्तये ॥ नस्याऽभ्यञ्जनयोर्देयं तैलं सर्षपसंभवम् ॥ ॥ ४० ॥ कटुतैलाक्तसुत्तानं बंधयित्वाऽतपे न्यसेत् ॥ दर्शयेदद्भुतं किंचिद्ब्रूयादिष्टविनाशनम् ॥ ४१ ॥ तप्तैर्लोहैस्तैलजलैः कपिकच्छ्वाऽथवा[2] स्पृशेत् ॥ केशाभिस्ताडयित्वा तु स्थापयेन्निर्जने[3] गृहे ॥ ४२ ॥ शास्त्र-

---

१ ज्वालशाखा–चितौषध । २ कोडा–आरवंद । ३ शून्यगृह–कोठरीमें ।

हस्तैर्गजैः सिंहैः सर्पैश्च त्रासयेत्तथा ॥ सुप्तं समं बहिर्नीत्वा त्रासयेद्युर्धुधाश्च तम् ॥ ४३ ॥ सर्वतो विप्लुतं चेतस्तेनैव परिशाम्यति ॥ सर्वदुःखभयेभ्योपि परं प्राणभयं महत् ॥ ४४ ॥

## अथ सारस्वतचूर्णम् ।

कुष्ठाऽश्वगंधे लवणाऽजमोदे द्वे जीरके त्रीणि कटूनि पाठा ॥ मांगल्यपुष्पाणि समानि चूर्णं कृत्वा तु चूर्णेन वचोद्भवेन ॥ ४५ ॥ तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मितायाः ॥ सर्पिर्मधुभ्यां च ततोऽक्षमात्रं लिह्यान्नरः सप्तदिनं हिताशी ॥ ४६ ॥ समस्तमुन्मादगदं निहंति वातोद्भवान्सर्वगदान्प्रमेहान् ॥ सारस्वतं चूर्णमिदं विधात्रा विनिर्मितं लोकहिताय पूर्वम् ॥ ४७ ॥

## अथांजनम् ।

कटुत्रिकं हिंगु वचा शिरीषबीजं तथा सैंधवसर्षपाश्च ॥ गोमूत्रपिष्टं नयनांजनं स्यादुन्मादचातुर्थिकरोगहारि ॥ ४८ ॥

## अथ पानीयकल्याणघृतम् ।

फलत्रिकं रेणुकदेवदारु स्थिरा नतं रात्रियुगं विशा-

१ माङ्गल्यपुष्प । धनप्साका फ़ुऊ–त्रायमाणा । २ ब्रह्मीबूटीके रसमें । ३रेणुका–मरिचसदृश दाने गुळावीरंगके होतीहे इसीनामसे मिलती हैं–( गुळाबीमर्चि )।

लाः ॥ गोपीद्वयं चन्दनपद्मकुष्ठंनीलोत्पलैलाबृहतीसमंगाः ॥ ४९ ॥ तालीसपत्रं त्रिवृता विडंगं रुदन्तिका केशरयष्टिकं च ॥ तत्पृश्नपर्णीसुमनोद्भवानि पुष्पाणि सर्वं समकर्षभागम् ॥ ५० ॥ चतुर्गुणे वारिणि प्रस्थमाज्यं विपाचयेत्प्रस्थमिदं गदेषु ॥ मंदाऽनलोन्मादगदेषु मेदाऽपस्मारपाड्वामयमूत्रकृच्छ्रम् ॥५१॥ उन्मादकाले नियतो भूतोत्थं तमुदाहरेत् ॥ पानीयकल्याणकघृतं सर्वोन्मादं हरेन्नृणाम् ॥ ५२ ॥

## अथ भूतोन्मादधूपः ।

रिक्षजम्बूककेशाश्च लशुनं शल्लकी वचा ॥ हिंगु मूत्रं च बस्तस्य धूममस्य प्रयोजयेत् ॥ ५३ ॥ शीघ्रमेतन्न शाम्यन्ति बलवन्तो महाग्रहाः ॥ ५४ ॥

## अथाऽपस्मारसामान्यलक्षणम् ।

हतस्मृतिर्यः कुपितैश्च दोषैर्ज्ञेयो ह्यपस्मारगदश्चतुर्धा ॥ हृत्कम्पशून्यत्वतमःप्रवेशप्रध्मानमूर्छाश्च भवंति पूर्वम् ॥ ५५ ॥ फेनोद्वामी कंपते वातिके च पित्ते पीतं फेनवक्त्राऽक्षिरूपम् ॥ शुक्लः फेनः श्लेष्मजे शीतमंगं सर्वे चिह्नं जायते सन्निपातात् ॥ ५६ ॥

१ रुद्रवंती बूटी न मिले तो सेंमकी जड देना । २ गायका घी ।

## अथासाध्यापस्मारः।

स्फुरणं बहुशो यस्मिन्क्षीणतश्चलिते भ्रुवौ ॥ नयने विकृते स्यातामसाध्यं तं विनिर्दिशेत् ॥ ५७ ॥

## अथकल्याणकं चूर्णम्।

पंचकोलमरिचं सविडंगं पिप्पलीत्रिफलजीरकधान्यम् ॥ सैन्धवं बिडयुतं च यवानी चूर्णमुष्णसलिलेन निपीतम् ॥५८॥ हन्यादपस्मारकफाऽनिलांश्च श्वासग्रहोन्मादविषाऽग्निमांद्यम् ॥ कल्याणकं चूर्णमिति प्रसिद्धमर्शस्सु शस्तं ग्रहणीगदे च ॥ ५९ ॥ ब्राह्मीरसे कुष्ठकशंखपुष्पीवचाभिराज्यं च सुसिद्धमेतत् ॥ जयेदपस्मारमुदग्रवेगं संसेवनाद्वालशुनस्य कंदः ॥ ६० ॥ गोमूत्रयुक्तसिद्धार्थैः प्रलेपोद्वर्तने हिते ॥ धूमस्तीक्ष्णाऽग्निनस्यानि दाहः सूच्या कपोलयोः ॥ ६१॥ पुष्पोद्धृतं शुनःपित्तमपस्मारघ्नमंजनात् ॥ तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ ६२ ॥

## अथार्दितरोगचिकित्सा ( लकवा )।

### वातव्याधिनिदानम्।

रूक्षशीतलघुभिश्च तिक्तकैर्लंघनं प्लवनमार्गचेष्टितैः॥

---

१ फुनकताहै। २ शंखाहुली सुसुनकपत्री। ३ गायका घी। १ कुत्तेका पित्ता।

क्रोधशोकभयवेगधारणैश्चिन्तया च कुपितोऽनिलो बली ॥६३॥ स्रोतांसि रिक्तानि च पूरयित्वा करोति देहे विविधान्विकारान् ॥ एकांगजान्सर्वशरीरजांश्च तत्पूर्वरूपं कथितं तु तेषाम् ॥ ६४ ॥ व्यक्तं हि तद्रूपमपायखांज्यंपगुत्वंकुब्जत्वशरीरशोषाः ॥ गात्रस्य संस्पन्दनसुप्तते च ग्रीवाक्षिबंधः कुपितेऽनिले स्युः ६५॥ देहार्द्धभागः शिशिरप्रबाधः पक्षांभिघातेन भवेत्प्रसुप्तः ॥ वक्रीभवत्यूर्ध्वमुखं च यस्मिन्स्तमर्दितव्याधिमुदाहरन्ति ॥ ६६ ॥

## अथ धनुर्वातः।

कंठाऽवरोधो धनुराकृतिः स्याद्धृदि व्यथा दन्तनिबंधनं च ॥ मुखस्य शोपः शिशिरस्य कांक्षा यस्मिन्धनुर्वायुरुदाहृतः सः ॥ ६७ ॥

## अथाक्षेपकरोगः।

आक्षेपयत्याशु मुहुः शरीरमागत्य नाडीः पवनः प्रदुष्टः ॥ ज्ञेयस्तदाऽक्षेपकसंज्ञकोऽस्य वेगे गते स्वास्थ्यमुपैति मर्त्यः ॥ ६८ ॥

## अथ सर्वांगवातः।

कोष्ठाऽश्रिते दुष्टचले च निग्रहो विण्मूत्रयोर्व-

---

१ खञ्ज, लँगडा । २ पंगुला । ३ कूबडा । ४ । देहसुखाजाना । ५ पक्षाघात । हाथोंका लटकजाना । ६ आधेमुखका टेढा होना ।

ॠद्दहृदि व्यथा स्यात् ॥ सर्वांगवाते स्फुरैणं शरीरे पीडा भवेत्स्फोटनमस्थिसन्धौ ॥ ६९ ॥

## अथ यत्नः।

आदौ संशोध्य वातार्तं स्नेहपाने नियोजयेत् ॥ वर्तिर्नावनमभ्यंगः स्निग्धं वाताऽमयापहम् ॥ ७० ॥

## अथ रास्नादितैलम्।

रास्नाशताह्वासुरदारुकुष्ठं माषा उमातैलवचाकुलत्थाः ॥ एतैः प्रदेहोऽनिलरोगिणां हि स्नेहैश्चतुर्भिर्दशमूलमिश्रैः ॥ ७१ ॥ उष्णैश्चमत्स्यादिकवेसवारैः स्वेदस्तथा वातविनाशनः स्यात् ॥ फणिज्जकोत्थेन रसेन वातग्रस्तं प्रदेशं परिलेपयेत्तु ॥ ७२ ॥

## अथ रसोनादिचूर्णम्।

पलं रसोनस्य सुकुट्टितस्य सिन्धूत्थसौवर्चलजीरकाणि ॥ कटुत्रिकं हिंगु सुचूर्णितं तच्छाणप्रमाणं परिलोड्य सर्वम् ॥ ७३ ॥ यथाऽग्नि भक्षेत्खलु मासमेकं प्रातर्मनुष्यो रुबुवारिणा तत् ॥ निहंति सर्वांगजमप्यशेषं वातं कटीपृष्ठगदादितानि ॥ ७४ ॥

## ( पुनः )

पिष्ट्वाऽतिसूक्ष्मं लशुनं घृतेन विलिह्य हन्यात्पव-

१ ब्रध्न, मूल, जड। २ स्फुरण—फरकना, चमकना। ३ पान। ताम्बूल।

नोत्थरोगान् ॥ तथेन्द्रबीजाऽग्निमहौषधानां चूर्णं हरे-द्वातभवान्विकारान् ॥ ७५ ॥

## अथ सहचरादितैलम् ।

सहचरसुरदारुनागराणां कथितजलं प्रपिबेद्धि तैल-मिश्रम् ॥ पवनपरिहृता गतिर्हि यस्य प्रभवति सप्त दिनैस्स गंतुमीशः ॥ ७६ ॥ प्रातः पिबेदार्द्रकजं रसं हि तैलान्वितं वंर्ध्मविकारशान्त्यै ॥ क्वाथो निपीतो दशमूलजातः सपुष्करो हिंगुयुतश्चलघ्नः ॥ ७७ ॥

## यत्नः ।

स्निग्धोष्णशीतैरपि रूक्षभोज्यैर्न वातजः शाम्यति यो विकारः ॥ ज्ञेयं प्रदुष्टं रुधिरं नरेण कुर्यादसृङ्मोक्ष-णमत्र शीघ्रम् ॥ ७८ ॥ श्यामामूलं क्षीरपिष्टं निपीतं वासायुक्तं नाशयेदूर्ध्ववातम् ॥ सुप्ते वाते रक्तमोक्षं प्रकु-र्याल्लेपं सिंध्वाऽगारधूमैः सतैलैः ॥ ७९ ॥ प्रातः पिबेदुष्णजलेन यत्नाच्छिन्नामरीचं हृदयाऽनिलघ्नम् ॥ गुडेन वा नागरदारुचूर्णं हृद्वातपीडा परिपीडितस्तु ॥ ८० ॥ सर्वांगजं शिरामोक्षैः शृंग्यैरेकांगजं जयेत् ॥ वमनं हंति नस्यं च वक्षःस्कन्धत्रिकस्थितम् ॥ ८१॥ रुणद्धि केवलो बस्तिवातं सर्वांगसंस्थितम् ॥ बस्ति-

१ रोगभेद । २ शींगी—वा चोवी ।

कुक्षिगुदस्थे तु तैलमैरण्डजं पिबेत् ॥ ८२ ॥ धनुर्वायुः शमं याति सर्जतैलस्य मर्दनात् ॥ दशमूलकषायो वा पाने नस्ये च शस्यते ॥ ८३ ॥ समुद्धरेत्सर्जतैलं यंत्रे च नलिकाभिधे ॥ विमर्दनं तेन तनौ पक्षघातं विनाशयेत् ॥ ८४ ॥ वैशाखे कृष्णसर्पस्य हरेद्धे भ्रुवचार्दितम् ॥ यथा शिम्बजटा हन्यात्रिदोषज्वरसुल्बणम् ॥ ८५ ॥ पक्षाऽभिघाते कटुतुंबिबीजं तैलं तथा निम्बफलोद्भवं च ॥ गोमायुपारावतकुक्कुटानां पित्तैः प्रलेपः प्रशमाय वायोः ॥ ८६ ॥ कटयूरुजंघाभुजवेदनासु शस्तो नराणामपि गृध्रसीषु ॥ तुरंगगंधासितखण्डयुक्ता घृतेन भुक्ता कटिकष्टहन्त्री ॥ ॥ ८७ ॥ फलत्रिकं निम्बफलत्वचश्च वासापटोलौ क्वथितं तु सर्वम् ॥ सकौशिकं रात्र्यवसानकाले पीतं भवेदर्दितहारि शीघ्रम् ॥ ८८ ॥

## अथ योगराजगुग्गुलुः ।

कृष्णाजटानागरचव्यवह्निपाठाविडंगेन्द्रयवैः समांशैः॥हिंगूग्रगंधा द्विजयष्टिकौती मातंगकृष्णाऽतिविषान्वितैश्च ॥ ८९ ॥ ससर्षपाऽजाजियुगाजमोद्वान्वितैः

---

१ सर्जतेल—चोवाका तेल—करायलका तेल । २ सियार—गीदड । ३ परेवा, छकाकबूतर । ४ मुर्गापक्षी । ५ गूगुर । ६ अजमोदा । ७ रेनुका, गुलाबी मरचि ।

समस्तैस्त्रिफला द्विभागा ॥ एभिस्समो गुग्गुलुराज्यमिश्रो भुक्तोजयेत्पक्षमवानिलार्तिम् ॥ ९० ॥ स्थितो सदेशे पवनः शिराश्च प्रकुंच्य कुर्यादवबाहुकं तु ॥ माषा बलासैंधवहिंगुरास्नावचाशताह्वादशमूलशुंठ्यः॥९१॥ एभिस्तु तैलं परिपक्कमाशा नस्येन हन्यादपबाहुसुग्रम्॥ मूलं बलायाः कपिकच्छुनिंबरसं पिबेद्बाहुविकारशान्त्यै॥९२॥ बलामूलभवः क्काथः सैन्धवेन समन्वितः॥ बाहुशोषगदं नस्याद्धन्यान्माषरसोऽथवा ॥ ९३ ॥ धत्तूरतैलस्य च मर्दनेन शमं प्रयात्याश्वपबाहुकाख्यः॥ हन्याद्विमर्द्योऽनिलशत्रुतैलं सर्जोत्थतैलैरथ तं दिनांते ॥ ९४ ॥ पित्तास्रयुक्तः पवनः प्रकुर्यात्पादेषु दाहं प्रसभं नराणाम् ॥ वातास्रजो जानुगतस्तु शोफो ज्ञेयो नरैः क्रोष्टकशीर्षकस्तु ॥ ९५ ॥

## उपचारः ।

पिष्टैर्मसूरद्विदलैःशृतशीतिवारिलेपात्प्रशांतिमुपयाति च पाददाहः ॥ पादौ प्रलिप्य मनुजो नवनीतकेन तत्त्वां प्रयाति दहने परितापशांतिम् ॥ ९६ ॥ पाददाहे तु कुर्वीत वातरक्तचिकित्सितम् ॥ गुडूचीत्रिफलाक्काथं सपुरं क्रोष्टशीर्षके ॥ ९७ ॥

---

१ ऐ।

पिबेदेरंडतैलं वा पयसा वृद्धदारुकम्॥ पिबेत्तित्तिरमांसस्य रसं वा सगुरं पिबेत् ॥ ९८ ॥ आक्षेपके शिरां विध्य कुर्याद्वातहरां क्रियाम् ।

## नस्यम् ।

तीक्ष्णैः प्रधमनैर्नस्यैस्तथा संज्ञां स विंदति ॥ ॥९९॥कपिकच्छुबलैरंडमाषनागरसाधितम् ॥ ससैन्धवं पिबेत्काथं नासारंध्रेण मानवः ॥१०० ॥ पक्षाघातं निहंत्याशु शिरोरोगं हनुग्रहम् ॥ अर्दितं संधिवातं च मन्यास्तंभं सुदारुणम् ॥ १०१ ॥

## अथ रास्नादिघृतम् ।

रास्नापौष्करशिग्रुबिल्वदहनं सिन्धूत्थगोक्षूरकम् पिष्ट्वा पिप्पलिसंयुतं चलगदे पेयं सदा सर्पिषा ॥ संपच्याऽथ चतुर्गुणेन पयसा वा वाजिगन्धायुतं सर्पिः पेयमसाध्यवातजगदे शुक्रक्षये दारुणे ॥ १०२॥

## अथ स्वच्छन्दभैरवरसः ।

शुद्धसूतमृतलोहगंधकं टंकणं च विषतालकताप्यम् ॥ त्र्यूषणाऽरणिहरीतकिसुंडीचूर्णमत्र सकलं परिमर्द्य ॥ ॥१०३॥निर्गुंडिकायाः स्वरसे दिनैकं पचेत्तथा सुंडिरसे दिनैकम्॥ जातो रसो वल्लमितो गृहीतो हन्यादशेषान्पवनोत्थरोगान् ॥ १०४ ॥ पक्षाघातं निहन्त्याशु

नाम्ना स्वच्छंदभैरवः ॥ गृध्रसीमपबाहुं च क्रोष्टुशीर्षादि वै हरेत् ॥ १०५ ॥

## अथ गृध्रसीनिदानम् ।

पृष्ठोरुजानुजघनं च पदं क्रमेण स्फिक्पूर्वकं कटितटं किल गृध्रसीयम् ॥ गृह्णाति वेपथुगुरुत्वरुजाऽतितोदैः प्रस्यंदते मुहुरिति द्विविधा मता सा ॥ १०६ ॥ वातोद्भवायां गुरुवक्रमंगं जंघोरुजानुस्फुरणं च संधौ ॥ संस्तब्धता वातबलासजायां तन्द्राऽरुचिर्गौरववह्नि-मांद्यम् ॥ १०७ ॥ दशमूलं गुडूची च बला रास्नामहौषधम् ॥ रुबुतैलयुतं पीतं हन्याद्गृध्रसिखंजताम् ॥ ॥ १०८ ॥ मेषीशृंगीगोक्षुरैरंडबिल्वमूलं वेळं चोक्षैकंठं च सिंही ॥ क्काथं पीत्वैरंडतैलेन युक्तं हन्याद्वातं गृध्रसीरोगमुग्रम् ॥ १०९ ॥ गोमूत्रैरण्डतैलाभ्यां कृष्णाचूर्णं पिबेन्नरः ॥ तेन प्रणाशमायाति चिरोत्थो गृध्रसीगदः ॥ ११० ॥ एरण्डबीजानि पचेच्च दुग्धे तत्पायसं गृध्रसिरोगहारि ॥ शेफालिकापर्णभवः कषायः कृष्णायुतो गृध्रसिरोगहंता ॥ १११ ॥ महानिम्बस्य मूलं हि पीतं हन्याच्च गृध्रसीम् ॥ यदि नोपशमं याति दहेत्पादकनिष्ठिकाम् ॥ ११२ ॥

---

१ कांपना । २ कटकटेरी । ३ मेंडकी ।

द्वौ प्रस्थौ त्रिफलायास्तु प्रस्थमेकं तु गुग्गुलोः ॥ अपां द्रोणे स्थितं रात्रावर्द्धशेषं पचेत्तु तत् ॥ ११३ ॥ वस्त्रपूतं विधायाथ लोहभांडे पुनः पचेत् ॥ उत्तार्य दद्याद्द्रव्याणि पलार्द्धानि पृथक्पृथक् ॥ ११४ ॥

## अथ पथ्यागुग्गुलुः ।

विडंगदन्ती त्रिफला गुडूची त्र्यूषणं त्रिवृत् ॥ एकीकृत्य च तत्सर्वं गुटिकामक्षमात्रिकाम् ॥ ११५ ॥ भक्षयित्वा प्रकुर्वीत यथेष्टं पानभोजनम् ॥ सेव्यमाना निहन्त्याशु गृध्रसीमुद्धतामपि ॥ ११६ ॥ अर्दितं जठरं गुल्मं पांडुरोगमरोचकम् ॥ प्लीहानं वातरक्तं च कंडूर्दद्रूश्च खंजताः ॥ ११७ ॥ सर्वरोगान्निहन्त्याशु पथ्याख्यो नाम गुग्गुलुः ॥११८॥ तैलं श्वदंष्ट्रास्वरसेन तुल्यं क्षीराढकं पंचपला च शुंठी ॥ गुडस्य वै विंशतिकानि तानि सर्वं समीकृत्य पचेद्धि वह्नौ ॥ ११९ ॥ सिद्धं हरेद्गृध्रसिकंपवातं कटिग्रहं पृष्ठगदं च शोफम् ॥ पाने च नस्ये च हितं च बस्तौ वन्ध्यापि पानाल्लभते सुपुत्रम् ॥ १२० ॥

इति श्रीगौडवंशावतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे उन्मादाऽपस्मारवातव्याधिगृध्रसीनिदानचिकित्साकथनं नाम षष्ठोल्लासः ॥ ६ ॥

## वातरक्तचिकित्सा ।

क्षारोष्णकट्वम्लविदाहितीक्ष्णैर्द्ध्यारनीलामिषमत्स्यमद्यैः॥ पिण्याकनिष्पावकुलित्थमाषैर्हस्त्यश्वयानैरतिसेवितैश्च ॥ दुष्टे वाते रक्तमाशु प्रदुष्येत्तत्प्राबल्यादुच्यते वातरक्तम्॥१॥ मूलं धृत्वा पादयोर्हस्तयोर्वा कृत्स्नं देहं सर्पति क्रुद्धमेतत् ॥ कंडूःपीडादर्शनं मंडलानां स्याद्वैवर्ण्यं वातरक्तस्य पूर्वम् ॥ २ ॥ वाताऽधिक्ये शूलकंपौ शरीरे स्पर्शोद्विग्नौ स्वापयुक्तौ च पादौ ॥ पित्ताधिक्ये दाहमोहौ भृशोष्णं श्लेष्माधिक्ये कंडुमन्तौ सशोफौ ॥ ॥ ३ ॥ सर्वैर्दोषैः शोणितं चातिदुष्टं स्वंस्वं चिह्नं पादयोर्ज्ञेयमेतत् ॥ ४ ॥ वातशोणितिनं स्निग्धमादौ सम्यग्विरेचयेत् ॥ रक्तमोक्षं ततः कुर्याद्यथादोषबलाबलम् ॥ ५ ॥

## अथ पथ्यम् ।

पुराणगोधूमयवामकुष्ठा मुद्गा मसूराश्चणकाश्च शालिः ॥ उपोदकी वास्तुककाकमाची शतावरी तित्तिरिलावकाश्च ॥ ६ ॥ एते प्रशस्ताः किल वातरक्ते दुग्धं सिता सर्पिरपिप्रशस्तम् ॥ क्वाथो वृषारग्वध कुंडलीनामेरण्डतैलेन समं निपीतः ॥ ७ ॥ जयेदसृग्वातभवं

---

१ तिळखरी । वा तिळ ।　२ मोथी वा भटवाँस वा वोडा । ३ मूलं—रक्ताशयमें ।　४ मोह । वनमूँगी । ५ पोईशाग । ६ गुर्चि ।

विकारं सर्वांगजं शोफविदाहयुक्तम् ॥ त्रिवृद्विदारीक्षुरजः कषायोऽथवागुडूच्यास्स्वरसो हितश्च ॥ ८ ॥ तिस्रः पंचाऽथवापथ्याःपिष्ट्वा जग्ध्वा गुडेन तु ॥ पिबेच्छिन्नरुहाक्वाथं वातरक्तार्दितो नरः ॥ ९ ॥ माहिषं नवनीतं तु गोमूत्रक्षीरसैन्धवैः ॥ खलेनैकत्र संलोड्य वह्निना तापयेच्छनैः ॥१०॥ गात्रमुद्वर्त्तयेत्तेन देहस्फुटनशान्तये॥ वातरक्ते हितो लेपो घृतसर्जरसेन वा॥११॥ गौरसर्षपकल्केन प्रलेपो वातरक्तनुत् ॥ लेपो वरुणशिग्रूत्थः कांजिकेन रुजापहः ॥ १२ ॥ मंजिष्ठाऽरिष्टवासात्रिफलदहनकं द्वे हरिद्रे गुडूची भूनिम्बो रक्तसारस्सखदिरकटुकाबाकुचीव्याधिघातैः ॥ मूर्वाऽनन्ताविशालाक्रिमिरुपसहितैस्त्रायमाणैः सपाठैः ॥ पीतो हन्यात्समस्तान्सकलतनुगतान्वातरक्तप्रकोपान् ॥ ॥ १३ ॥ सारिवासर्जमंजिष्ठायष्टीसिद्धैः पयोन्वितैः ॥ तैलं पक्वं प्रयोक्तव्यं पिंडाख्यं वातशोणिते ॥ १४ ॥ व्यायामं मैथुनं कोपमुष्णाऽम्ललवणं रसम् ॥ दिवास्वप्नमभिष्यंदि गुर्वन्नं च विवर्जयेत् ॥ १५ ॥

---

१ जग्ध्वा । खाना । पीना । २ अमिलतासकीगुदी । ३ माहरी । ४ वनप्सा । ५ दुधवधारियाळता । ६ दंडकसरत । (सरो) बाहाजोरी । ७स्त्रीसंग । ८ क्रोध । ९ दिनमें सोना । १० दहीकाखाना । ११ भारीपदार्थकासेवन ।

## ऊरुस्तंभनिदानम् ।

शीतोष्णसंशुष्कगुरुद्रवान्नैः स्निग्धैस्तथा स्वप्नसुजागरैश्च ॥ आयाससंक्षोभभयैरजीर्णैः सश्लेष्ममेदः ॥ पवनः प्रदुष्टः ॥ १६ ॥ यदाभिभूतेतरदोषमाममूरुद्वयं चेत्प्रतिपद्यते हि ॥ अस्थीनि मध्ये परिपूर्य सन्धीन् कफेन तेनोरुयुगं सुशीतम् ॥ १७ ॥ अचेतनं स्तब्धमतिव्यथं स्यात्सपादकृष्णोद्वहनं प्रसुप्तम् ॥ ध्यानांगमर्दज्वरवर्तितन्द्रास्तैमित्यमांद्यारुचिगौरवाणि॥१८॥ तमूरुस्तम्भमित्याहुराढ्यवातं तथापरे ॥ संस्थाने पीडने गत्यां चलने वाप्यनीश्वरः ॥ १९ ॥ रक्तस्रावं रेचनं वस्तिकर्म स्नेहं वान्ति वर्जयेदाढ्यवाते ॥ रूक्षः स्वेदो लंघनं जीर्णशालिश्यामाकाद्याः क्रोद्रवोद्दालमुद्गाः ॥ २० ॥ शस्तं मांसं जांगलं मूलकं वा वृन्ताकं वा वास्तुकं निम्बपत्रम् ॥ नद्या नीरे शीतले तारयेच्च भूयोभूयश्शीततोयं सरश्च ॥ २१ ॥ सक्षारमूत्रैः परिषेक उक्तो लेपः करंजोद्भवसर्षपैश्च ॥ अर्कस्य मूलैरथवा प्रलेपः सवाजिगंधाऽमरदारुणा वा ॥ २२ ॥ वल्मीकमृत्तिकाक्षौद्रसर्षपैर्निम्बपल्लवैः ॥ गाढमुत्सादनं कुर्यादूरुस्तम्भे सवेदने ॥ २३ ॥ पिप्पली नागरं

---

१ वनकोदो । २ व्यमौडकी माटी ।

चव्यं गुग्गुलुं च शिलाजतु ॥ ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलरसेन वा ॥ २४ ॥

## अथ श्रीवेष्टादितैलम्।

श्रीवेष्टकं केसरकुष्ठदारुजलाऽश्वगंधासरलाऽजगंधाः ॥ एभिः पचेत्सार्षपतैलमूरूस्तंभं जयेत्क्षौद्रयुतं निपीतम् ॥ २५ ॥ शेफालिकादलक्काथं कणायुक्तं पिबेन्नरः ॥ कफघ्नं यच्च तत्सर्वमूरुस्तंभे प्रयोजयेत् ॥ ॥ २६ ॥

## अथामवातरोगचिकित्सा।

विरुद्धचेष्टस्य गताऽनलस्य सुस्निग्धमन्नं भजतो नरस्य ॥ आमः प्रदुष्टो धमनीः प्रपद्य वातेरितः संधिषु धावतीति ॥ २७ ॥ मन्याकटीपृष्ठकरांसगुल्फसन्धीन्विकुंच्याऽथ करोति शोफम् ॥ भृशं व्यथां वृश्चिकविद्धतुल्यां स आमवातः कथितो भिषग्भिः ॥ ॥ २८ ॥ विरेचनस्वेदनलंघनानि कटूनि तिक्तानि च दीपनानि॥ रूक्षान्नपानानि च भोजनानि शस्तानि सर्वाणि किलामवाते ॥ २९ ॥ वचाशताह्वावरुणत्व-

---

१ मेउडी। २ गलेकी पिछली नस। ३ पांवकी गांठि।

चश्च पुनर्नवादारुशंठीश्वदंष्ट्राः ॥ प्रसारणीनागरकेतु-
मुंडीवरीफलं कारिकसूक्ष्मपिष्टम् ॥ ३० ॥ तेनोप-
नाहं च विधाय लेपं कृच्छ्रामवातं हि जयेदभिज्ञः ॥
वा पंचकोलस्य कृतः कषायः पीतो जयेद्दुर्जयमाम-
वातम् ॥ ३१ ॥ रसनाऽमरदारुराजवृक्षत्रिकुटैरण्ड-
पुनर्नवाऽमृतानाम् ॥ क्वथितं जलमामवातमेषां शम-
येन्नागरकल्कमिश्रमाशु ॥ ३२ ॥ वह्निव्योषविडंग-
सैंधवघनत्वक्पत्रतालीसजं चव्यैलाऽमरदारुकुष्ठर-
सनोशीरं यवानीद्वयम् ॥ रास्नागोक्षुरधान्यजीरक-
यवक्षाराऽजमोदावरीमूलं कारविकासमं च सकलैस्तु-
ल्यो भवेद्गुग्गुलुः ॥ ३३ ॥ घृतेन संमर्द्य दृढं निधाय
स्निग्धे सुभाण्डेऽस्य ततोक्षमात्राम् ॥ युंज्याद्यथेष्टा-
चरणो नरस्स्याद्दुष्टाऽमवातं जयति प्रसह्य ॥ ३४ ॥
ख्यातःक्षितौ गुग्गुलुयोगराजः समस्तवाताऽमयनाश-
नः स्यात् ॥ दुर्नामगुल्मोदरमामवातं प्लीहाऽग्निमांद्यं
जयति व्रणं च ॥ ३५ ॥

## अथ पुनर्नवादिचूर्णम् ।

पुनर्नवाछिन्नरुहाशताह्वामुंडीसठीदारुकनागराणा-

---

१ उसरितृण । डाभ । २ केतु । केतुकी । ३ कारिकफल । कांजिक इ०. पा० । वृक्षभेद । ४ सौफश्वडी । ५ गोळे । ६ जळोदर । ७ पिळ-हीविरवट । ८ घाव ।

म् ॥ चूर्णं निहन्यात्किल कांजिकेन दुष्टाऽमवातं चिरगृध्रसीं च ॥३६॥ रसोनस्य पलं हिंगुव्योषसैन्धवजीरकाः॥ सौवर्चलं विडं[1] काचं पिष्ट्वा तैलेन मिश्रयेत्॥ ॥ ३७ ॥ कर्षैकं भक्षयेत्प्रातरामवातार्दितो नरः ॥ एरण्डतैलसंयुक्तां भक्षयेद्वा हरीतकीम् ॥ ३८ ॥ अभिष्यंदकरा ये च ये चान्ये गुरुपिच्छिलाः ॥ वर्जनीयाः प्रयत्नेन ह्यामवातार्दितैर्नरैः ॥ ३९ ॥

इति श्रीगौडवंशावतंसश्रीमदनंतभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे वातरक्तोरुस्तंभामवातनिदानचिकित्साकथनंनाम सप्तमोल्लासः ॥ ७ ॥

## अथ शूलरोगचिकित्सा ।

शूलोऽष्टधा द्वंद्वपृथक्समस्तैरामेन दोषैरिह वायुरुग्रः ॥ व्यायामरुक्षाऽध्यशनाऽभिघातैर्वायुः प्रकुप्याशु करोति शूलम् ॥ १॥ हृत्पार्श्वपृष्ठोदरबस्तिकुक्षौ मुहुर्मुहुः शांतिमुपैति कोपम् ॥ कट्वऽम्लतीक्ष्णोष्णसुरादिभिश्च पित्तं प्रदुष्टं जनयेद्धि शूलम् ॥ २ ॥ मध्यंदिने कुप्यति चार्द्धरात्रे संस्वेदमूर्च्छावमिदाहयुक्तम् ॥ किलै[2]-

१ विडंगां च इ० पा० ।　२ किलाट । नष्टदुग्ध । इंडरी ।

ष्टमांसेक्षुपयोविकारैर्माषैस्तिलैः शूलकरः कफः स्यात् ॥ ३ ॥ हृल्लासकासाऽरुचिसंप्रसेका भुक्तेऽतिमात्रं हि रुजो भवंति ॥ ४ ॥ सर्वदोषोत्थितः शूलः सर्वलक्षण-संयुतः ॥ द्विदोषलक्षणोपेतो विज्ञेयस्तु द्विदोषजः ॥५॥ स्तंभनाऽटोपहृल्लासैस्तैमित्यच्छर्दिगौरवैः ॥ कफस्य लिंगेन समं शूलमामोद्भवं स्मृतम् ॥ ६ ॥ संपाचन-स्वेदनलंघनानि सक्षारचूर्णाः फलवर्त्तयश्च ॥ वांति-र्विरेको गुटिकास्तथैव सर्वेषु शूलेष्वनिवारितं हि ॥७॥ स्वेदैःस्नेहैः पायसैश्च वातशूलमुपाचरेत् ॥ तस्यशूलाऽभिपन्नस्य स्वेद एव सुखावहः ॥८॥ तिलानां पिष्य गुटिकां विधाय जठरोपरि ॥ भ्राम्यमाणा तु सा हंति शूलं परमदारुणम् ॥९॥ नाभिलेपाज्जयेच्छूलं मदनं काञ्जि-कान्वितम् ॥ स्नेहेन युक्तः कौलत्थो हंति शूलं समीरजम् ॥१०॥ तथा लिंबरसो हिंगुव्योषसैन्धवसंयुतः ॥ सौव-र्चलं दाडिमरसैर्युक्तं शूलनिवारणम् ॥११॥ विश्वैरंडय-वक्वाथो हिंगुसौवर्चलेन च ॥ हिंगुपुष्करमूलाभ्यां युक्तः शूलनिवारणम् ॥१२॥ पित्ते प्रशस्ताः सलिलाऽवगाहा भांडानि कांस्यानि जलप्लुतानि ॥ निधाय शूलोपरि शीतलानि प्रशामयेच्छूलमनेन विज्ञः ॥ १३ ॥ पटो-लेक्षुरसाद्यैश्च वामयेत्पित्तशूलिनम् ॥ पश्चाद्विरेचयेत्स-

---

१ हिचकी उबकाई । २ प्रसेकफ । अतिगर्मी ।

म्यक्सितया त्रिवृता सह ॥१४॥ कफे प्रवाम्य शूलार्तमवश्यमुपवासयेत् ॥ लवणत्रितयं हिंगु पंचकोलयुतं पिबेत् ॥१५॥ शंखस्य चूर्णं लवणं सहिंगु व्योषं सुखोष्णेन जलेन पीतम् ॥ शूलं त्रिदोषप्रभवं निहंति व्योषान्वितं दाडिमसैन्धवं वा ॥ १६ ॥ त्रिफलाचूर्णसंयुक्तं मण्डूरं विलिहन्नरः ॥ मधुसर्पियुतं शीघ्रं शूलं हंति त्रिदोषजम् ॥ १७ ॥ आमशूले च कर्त्तव्यं कफशूलविनाशनम् ॥ चित्रकग्रंथिकैरण्डशुंठीधान्यजलं हितम् ॥ ॥ १८ ॥ एरण्डसिंहीद्वयमातुलुंगपाषाणभेदत्रिकबिल्वमूलैः ॥ कृतः कषायो रुबुतैलहिंगुक्षारैर्युतः शूलगदेषु पेयः ॥१९॥ हृदिस्थः कुरुते शूलं मारुतो रसमूर्च्छितः स हृच्छूल इति ख्यातः परमुच्छ्वासरोधकः ॥ २० ॥ वस्तिवंक्षणयोः शूलं संरोधात्कुपितोऽनिलः ॥ वस्तिशूल इति ज्ञेयो वातविण्मूत्ररोधकः ॥ २१ ॥ दक्षिणं कुक्षिमादाय वामं वा यत्नमबाध्यते ॥ सर्वत्र भ्रमति क्षिप्रं न शान्तिमधिगच्छति ॥ २२ ॥ पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च वेदना ॥ विट्शूलमेतद्विज्ञेयं भिषजा दारुणं परम् ॥ २३ ॥ मद्येन नित्यं तु रसोनकल्कं प्रातः पिबेद्वातकफोत्थशूली ॥ क्षीरोदकं पिप्पलिसैन्धवाक्तं पीतं जयेद्धुर्जयमुग्रशूलम् ॥ २४ ॥ चूर्णं समं रुचकहिंगुमहौषधानामुष्णा-

१ मंडूर । लोहकिट्ट । २ वनभाँटा । ३ गोखरू ।

म्बुना कफसमीरणसंभवासु ॥ हृत्पार्श्वपृष्ठजठरार्तिविषूचिकासु पेयं तथा यवरसेन च विड्विबन्धे॥ २५ ॥ गोमूत्रपाचितं तैलं हिंगुसैन्धवसंयुतम् ॥ नाभिस्थाने प्रदातव्यं हंति शूलं सुदुर्जयम् ॥ २६ ॥ सक्षारः शिग्रुजः क्वाथो मातुलुंगरसोऽथवा ॥ पीतो मधुयुतः पार्श्वकुक्षिहृद्बस्तिशूलनुत् ॥ २७ ॥ वाते निरूहो वस्तिश्च पित्ते क्षीरं विरेचनम् ॥ कटुतिक्तकषायाश्च शूले वांतिकफोद्भवे ॥ २८॥ यस्य नैव प्रशांतिः स्याच्छृंगेलात्र्यूषणं हितम् ॥ नारायणेन तैलेन वस्तिकर्म हितं तथा ॥ २९॥ भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ॥ आकंठं पाययेन्मद्यं क्षीरमिक्षुरसं रसम् ॥ ३० ॥ मदनाऽरिष्टजं क्वाथं सम्यक्पश्चाच्च वामयेत् ॥ एरण्डजेन तैलेन रेचनं पक्तिशूलनुत् ॥ ३१ ॥ शम्बूकजं भस्म कवोष्णकेन पीतं क्षणाद्धंति हि पक्तिशूलम् ॥ कृष्णाऽभया लोहभवं च चूर्णं लीढं निहन्यान्मधुसर्पिषाऽथ वा ॥ ३२ ॥ सजलं नालिकेरं तु सैन्धवेन प्रपूरितम् ॥ विपक्वं वह्निना सम्यक् पक्तिशूलनिवारणम् ॥ ३३ ॥ क्षौद्रं कपर्दं विषसैन्धवं च व्योषान्वितं पर्णरसैर्विमर्द्य ॥ गुञ्जैकमात्रोऽनिलजे विकारे पक्त्यामशूले गजकेसरी स्यात् ॥ ३४ ॥ वचाविश्वाजीरोषण-

१ मैनी । २ थोंया । ३ क्षौद्रकपर्द । पीळीकौडीकाभस्म । क्षारम् इ०पा०

गरलबाल्हीकदहनत्वचां कार्या वटचैश्चणकतुलितामा-
र्कवरसैः ॥ यथा भानोर्भासस्तिमिरनिकरं कामिनि
तथा ॥ हरंत्येताः शूलान्यखिलमनिलानामस-
हितान् ॥ ३५ ॥

## अथ शूलोपद्रवः ।

वेदना च तृषा मूर्च्छा आनाहो गौरवाऽरुचिः॥का-
सश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः ॥ ३६ ॥

## अथोदावर्तनिदानचिकित्सा ।

रूक्षैः कषायैः कटुतिक्तशीतैर्विण्मूत्रवातादिकधा-
रणैश्च ॥ कोष्ठानुगो वायुरतिप्रवृद्धो मूत्राऽस्रमेदः
कफविड्रदानि ॥ ३७ ॥ स्रोतांस्युदावर्तयति
प्रसह्य तस्मादुदावर्तमिदं वदंति ॥ हृद्वस्तिशू-
लैरतिपीडितस्तु विड्वातमूत्राणि भवंति कृच्छ्रात् ॥
॥ ३८ ॥ उदावर्ते प्रयोक्तव्यमभ्यंगस्नेहरेचनम् ॥
क्षारचित्रकहिंग्वऽम्लवेतसैर्भेदनं मतम् ॥ ३९ ॥
करंजत्वक्फलं मूलं वल्मीकस्य च मृत्तिका ॥ मूत्रेण
पिष्ट्वा सिद्धार्थमुदावर्ते प्रलेपनम् ॥ ४० ॥ पथ्या मूर्वा
यवक्षारं त्रिवृच्चूर्णं घृतेन च ॥ पीतं जयेदुदावर्तगुल्मा-
ऽनाहैरुपद्रुतम् ॥ ४१ ॥

---

१ मत्स्याक्षी । मछेछीबुटी । २ वैद्यैः इ० पा० । ३ मूत्रपुरोषरीधकं ।
४ कानकेशब्दको ग्रहण करनेवाली नाडीको स्रोतकहते है ।

## उदावर्तहरवर्तिः।

वर्तिं सुवर्तितां कृत्वा हिंगुमाक्षिकसैन्धवैः ॥ घृताभ्यक्तां गुदे दद्यादुदावर्तहरां पराम् ॥ ४२ ॥ हरीतकीत्रिवृत्क्षारपीलुनीचूर्णमेकशः ॥ घृतेन पीतं हन्त्याशु गदोदावर्तवर्ध्मकम् ॥ ४३ ॥ सिता पलैकं त्रिवृता कणाकर्षः सुचूर्णितम् ॥ विलिहन्मधुना कर्षमुदावर्तात्प्रमुच्यते ॥ ४४ ॥

## अथानाहरोगचिकित्सा।

आमं पुरीषं निचितं विवृद्धं दुष्टवायुना ॥ वर्द्धमानं यथास्वं च तमानाहमुदाहरेत् ॥ ४५ ॥ आमाशये शूलमथो हृदयस्तंभगौरवम् ॥ भवेत्तु पक्वाशयजे श्वासो मूर्च्छा शकृद्भ्रमिः ॥ ४६ ॥ उदावर्ते तथानाहे विड्ढर्मिं परिवर्जयेत् ॥ दीपनं पाचनं शस्तमानाहे वस्तिकर्म च ॥४७॥ त्रिवृत्कृष्णा हरीतक्यो द्विचतुःपंचभागिकाः ॥ गुटिका गुडतुल्यास्ता विड्विबंधगदापहाः ॥ ४८ ॥ हिंगूग्रगंधा विडशुंठ्यजाजी हरीतकी पुष्करमूलकुष्ठम् ॥ भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदरानाहविषूचिकासु ॥ ४९ ॥

## गुल्मनिदानम्।

दुष्टैर्दोषैरेकशः सर्वशश्च गुल्मस्त्रीणां पंचमो रक्तजः

१ पीलुनी—चूरनहार मुर्वा। २ चरेद्गुरुम् इ० पा०।

स्यात् ॥ तस्य स्थानं पार्श्वहृन्नाभिवस्तिग्रंथिर्वृत्तो जायते गुल्मसंज्ञः ॥९०॥ कृच्छ्रेण विण्मूत्रचलप्रवृत्ति-राध्मानमन्नाऽरुचिरूर्ध्ववातः॥ अपक्तितृष्णांऽत्रविकूजनानि सर्वेषु गुल्मेषु च चिह्नमुक्तम् ॥९१॥ जीर्णेऽन्ने जायते कोपो भुक्ते शांतिश्चलाऽत्मके ॥ पित्तगुल्मे ज्वरस्तृष्णा शूलं जीर्यति भोजने ॥ ९२ ॥ कफगुल्मे गात्रसादहृल्लासच्छर्दिगौरवम् ॥ त्रिदोषजे महच्छूलं दाहस्तृष्णा बलक्षयः ॥ ९३ ॥ वाताऽनुलोमनं स्निग्धमुष्णं बृंहणदीपनम् ॥ लंघनं रक्तमोक्षश्च स्वेदः शस्तो हि गुल्मिनाम् ॥ ९४ ॥ केतकीसंभवः क्षारः स्वर्जिकाकुष्ठसंयुतः ॥ तैलेन पीतः शमयेद्गुल्मं पवनसंभवम् ॥ ९५ ॥ त्रिफलाम्बुना त्रिवृच्चूर्णं पित्तगुल्मे पिबेन्नरः॥कफजे जीर्णमद्येन पंचमूलीजलं पिबेत् ॥९६॥ हिंग्वऽम्लवेतसवचाविजयायवानीक्षारैस्ससैन्धवविडैर्विहितं हि चूर्णम् ॥ पीतं जयेत्सपदि कोष्णजलेन सर्वान्गुल्मान्प्रभूतवमनाऽरुचिमांद्यशूलान् ॥ ९७ ॥ वर्चोवातनिरोधे तु सामुद्रार्द्रकसर्षपैः ॥ विधाय पाने दातव्या वर्तिर्वा मरिचोत्तरा ॥ ९८ ॥ हिंगुव्योषवचाऽम्लवेतसशठीधान्याऽजगंधाजया॥ पा-

१ बगलमें । २ देहके भीतर कोठेमें । ३ हिचकी । ४ खट्टीलता ।
५ गनियारवृक्ष ।

ठा तिंतिडिकाऽजमोददहनक्षारद्वयं दाडिमम् ॥ चव्य-ग्रंथिकपौष्कराणि हपुषा सौवर्चलं सैन्धवं पिष्ट्वा लुंग-रसेन जीरकविडं तद्भावयेत्सप्तधा ॥ ५९ ॥ प्रातः कर्षमितं विगृह्य गुटिकां गुल्मानशेषाञ्जयेच्छूलानाह-गरोदराऽरुचिवमिप्लीहाऽग्निमांद्यानि च ॥ सर्जिक्षा-रपलं गुडो द्विपलिकस्तत्राऽजगंधापलं चूर्णं पीत-मिदं जलेन सकलान्गुल्मान्सशूलाञ्जयेत् ॥ ६० ॥ नवप्रसूता या नारी गर्भं वा विसृजेद्दतौ॥ करोति गुल्मं सरुजं वायुः संगृह्य शोणितम् ॥ ६१ ॥ यः स्पंदते पिंडितश्च गर्भलक्षणसंयुतः ॥ चिकित्स्यो दशमे मासि गुल्मो ज्ञेयः स रौधिरः ॥६२ ॥ शताह्वाचिरबिल्वत्व-ग्दारुभार्ङ्गीकणोद्भवम् ॥ चूर्णं पीतं जयेद्गुल्मं तिलक्वा-थेन संयुतम् ॥ ६३॥ क्वाथस्तिलानां त्रिदिनं निपीतो भारंगिविश्वामगधामरीचैः ॥ तारुण्यभावेऽपि गतेऽपि नार्य्याः पुष्पं प्रनष्टं प्रगटीकरोति ॥ ६४ ॥

## अथ हृद्रोगचिकित्सा।

दूषयित्वा रसं दोषा विगुणा हृदयं गताः ॥ हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥६५॥ चिन्तावेगं-विनिग्रहश्रमभयाघातः प्रसंगादिभिः ॥ हृद्रोगः कफ-

१ अमली । २ कडवा वृक्ष । ३ हृदय—मन । ४ चलना । ५ नमानना ।

वातपित्तकृमिभिः सर्वैः पृथक्पंचधा ॥ संस्रावारुचिगौरवाऽग्निसदनं श्लेष्मोद्भवे हृद्गदे ॥ वातोत्थे हृदयं प्रतुद्यतेतितरां निर्मथ्यते पीड्यते ॥ ६६ ॥ तृष्णादाहमदभ्रमक्लम रुजः स्वेदश्च पित्तोद्भवे ॥ पांडुत्वं गुरुगौरवं च हृदये दोषत्रयोत्थे भवेत्॥ उत्क्लेदः कृमिजेऽरुचिभ्रममदौ निष्ठीवनं मांद्यता ॥ हृल्लासो वमनं ज्वरः कृमिगदस्तीव्राऽर्त्तिशोषान्वितः ॥ ६७ ॥

## पुष्करादिकाथः।

सपुष्करैः शुंठिवचायवानीपलाशपूतीकशठीसुराह्वैः ॥ क्काथस्त्वऽजाजी लवणप्रयुक्तो हृद्रोगमाशु प्रतिहंति पीतः ॥६८॥ कफोद्भवे छर्दनलंघनानि कुलत्थधान्यानि रसो यवान्नम् ॥ सग्रंथिकैलाहपुषाप्रलीढा हृद्रोगगुल्मौ त्वरितं निहंति॥६९॥ पित्तोद्भवे क्षौद्रसितासमेता द्राक्षा च पित्तापहमन्नपानम् ॥ हरीतकीं वा सितया जलेन पिबेच्च तिक्तां मधुयष्टिकां वा ॥७०॥ त्रिदोषजे लंघनमन्नपानं हितं च सर्वेषु तदेव देयम् ॥ पूर्वं विधेयं कृमिजे हि रोगे संपाचनं लंघनमुष्णपानम् ॥ ७१ ॥ हिंगूग्रग्रंधाविडशुण्ठ्यजाजीकुष्ठाऽभया-

---

१ प्रक्षंप्य इ०पा० । २ क्लम । ग्लानि । ३ स्वेदस्य इ०पा० । ४ जी मचलाना उमचना । ५ थूकना । थूथू । ६ हिचकी । ७ पारासमांदा परासबीज ।

चित्रकयावशूकम् ॥ पिबेत्ससौवर्चलपुष्कराढ्यं यवांभसा शूलहृदाऽमयघ्नम्॥७२॥ गोधूमककुभचूर्णं छागीपयोगव्यसर्पिषा पक्वम् ॥ मधुशर्करासमेतं जयति च हृद्रोगमुद्धतं पुंसाम् ॥ ७३ ॥

इति श्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे शूलपरिणामशूलाऽन्नाहोदावर्तगुल्महृद्रोगनिदानचिकित्सायामष्टमोल्लासः ॥ ८ ॥

## अथ मूत्रकृच्छ्रनिदानचिकित्सा ।

व्यायाममत्स्याध्यशनादजीर्णप्रसंगतीक्ष्णौषधिमद्यपानात् ॥ स्युर्मूत्रकृच्छ्राणि नृणां तथाऽष्टौ दोषैः पृथग्द्वंद्वसमस्तवातैः ॥ १ ॥ दोषा यदा कोपमुपेत्य वस्तौ मूत्रस्य मार्गं परिपीडयंति ॥ तदा नरो मूत्रयतीह कृच्छ्रात्तन्मूत्रकृच्छ्रं प्रवदन्ति वैद्याः ॥२॥ तीव्रा रुजो वंक्षणवस्तिमेढ्रे कृच्छ्रेण मूत्रं भवतीह वातात् ॥ पितात्सरक्तं सरुजं सदाहं कफात्सपिच्छं गुरुता च लिंगे॥३॥सर्वाणि रुपाणि च सन्निपातादाघाततो मूत्रनिरोधशूलम् ॥ तदाश्मरीरोगसमानलिंगं मूत्रं सृजेद्रक्तमथापि शुक्रम् ॥४॥ संस्वेदनाऽभ्यंजनवस्तिसेकस्नेहोपनाहा[१]स्तु रसाश्च शस्ताः ॥ क्वाथोऽमृतानागरवाजिगंधात्रिकंटकानां चल-

१ पट्टी बांधना।

मूत्रकृच्छ्रे ॥ ५ ॥ पयोविरेकाश्शिशिराः प्रदेहाः सेकावगाहाः किल पित्तकृच्छ्रे ॥ दार्वीनिशैर्वारुकबीजयष्टीचूर्णं पिबेत्तन्दुलधावनेन ॥ ६ ॥

## पित्तकृच्छ्रे ।

दार्वीधात्रीरसो हन्ति मधुना पित्तकृच्छ्रकम् ॥ शरकाशकुशादर्भा इक्षुश्चेति तृणोद्भवम् ॥ ७ ॥ एतत्सिद्धं पयः पेयं क्वाथो वा हन्ति शोणितम् ॥

## कफकृच्छ्रे ।

कफकृच्छ्रे यवान्नं च वमनं स्वेदनं मधु ॥ ८ ॥ गोमूत्रेण सुराभिर्वा कदलीस्वरसेन वा ॥ सूक्ष्मं पिष्य त्रुटिं पीत्वा कफकृच्छ्रं विनाशयेत् ॥ ९ ॥

## त्रिदोषकृच्छ्रे ।

मूत्रकृच्छ्रे त्रिदोषोत्थे यवक्षारगुडो हितः ॥ मूत्रकृच्छ्रेऽभिघातोत्थे[१] क्रिया वातहरी मता ॥ १० ॥ मंथं पिबेद्वा ससितं शृतं गव्यं घृतं तथा ॥

## सर्वकृच्छ्र ।

धात्रीरसं चेक्षुरसं मधुयुक्सर्वकृच्छ्रके ॥ ११ ॥

## अथ कुंकुमादिपानकम् ।

कुंकुमं केशरं क्षारं कर्षं गुडपलं तथा॥ अम्बुना लोडितं पीतं सर्वकृच्छ्रहरं परम् ॥ १२ ॥ हरीतकीगोक्षुर-

१ चोट लगना।

राजवृक्षपाषाणभृद्धन्वयवासकानाम् ॥ क्वाथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ १३ ॥ एलाऽश्मभेदकशिलाजतुपिप्पलीनामुर्वारुबीजलवणोत्तमकुंकुमानाम् ॥ चूर्णानि तंदुलजलैर्लुलितानि पीत्वा प्रत्यऽग्रमृत्युरपि जीवति मूत्रकृच्छ्री ॥ १४ ॥ अयोरजः श्लक्ष्णचूर्णं मधुना सह योजितम् ॥ मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ १५ ॥

## अथ मूत्राघातरोगचिकित्सा।

रौक्ष्याद्वेगविघाताद्वा प्रायो मूत्रस्य धारणात् ॥ जायंते कुपितैर्दोषैर्मूत्राघातास्तु दारुणाः ॥ १६ ॥ संस्वेदनं स्नेहनं च हितं स्नेहविरेचनम् ॥ दद्यादुत्तरवस्तिं वा मूत्राघाते सवेदने ॥१७॥ गोधाँविनीमूलकृतः कषायः सर्पिःपयोगोरससम्प्रयुक्तः॥ भिनत्त्यवश्यं बहुकालजातं मूत्रस्य संघातमतीव रुद्धम् ॥ १८ ॥

## अथाश्मरीनिदानचिकित्सा।

वायुर्वस्तिगतं शुक्रं कफं पित्तं च शोषयेत्॥अश्मर्याः क्रमशो वृद्धिः गोपित्तेष्विव रोचना ॥१९॥ पूर्वं नाभौ सेवनी वस्तिशीर्षे पीडाऽधिक्यं मूत्रकृच्छ्रं ज्वरः स्यात्॥

---

१ गोक्षुराणाम् इ० पा० । २ घोरना, मथन। ३ मूशली सफेद वा लजालूबडी । ४ निहन्त्यवश्यम् इ० पा० । ५ अश्मरी, पथरी।

मार्गे रुद्धे तत्तया शीर्णधारं मूत्रं गच्छेदल्पमल्पं मुहुश्च ॥ २० ॥ तिलतैलेन संयुक्तं धात्रीपल्लवजं रसम् ॥ प्रातः पिबेत्पुमान्यस्तु सोऽश्मरीं दारुणां जयेत् ॥२१॥ गुडेन युक्ता रजनी सुचूर्णिता तुषाम्बुना हन्ति महाश्मरोगम्॥ यद्वा यवक्षारगुडप्रयुक्तः कूष्मांडमज्जोत्थरसो निहंति ॥ २२ ॥ सहिंगु तैलं सघृतं च गव्यं पीतं जयेच्छुक्रजमूत्रदोषम् ॥ द्राक्षासिताक्षौद्रयुतानि हन्यादुग्धं च कृच्छ्रं गुडयुक्तमुष्णम् ॥२३ ॥ क्षौद्रेण हन्याद् बृहतीरसो वा पीतोश्मरीं दारुणमूत्रकृच्छ्रम् ॥ गुडेन युक्तो वरुणत्वचा वा क्वाथो जयेदश्मरिवस्तिशूलम् ॥ २४ ॥ पुराणसर्पिषा पीतं कुंकुमं हंति शर्कराम् ॥ गुडद्विगुणितक्षारो हन्यादश्मरिकृच्छ्रकम् ॥ २५ ॥ गोक्षुरैरण्डपत्राणि शिलाभिद्वरुणत्वचः ॥ नागरं च कृतः क्वाथः सक्षौद्रोऽश्मरिनाशनः ॥ २६ ॥

## अथ मेहरोगचिकित्सा ।

आस्यासुखं स्वप्नसुखं नवान्नं गुडवैकृतम् ॥ दधिदुग्धं च कफकृत्सर्वं मेहस्य कारणम् ॥ २७ ॥ मेदो मांसं च क्लेदं च कफो वस्तिगतो यदा ॥ प्रदुष्य कुरुते मेहानुष्णैः पित्तं तथैव च ॥ २८ ॥ तथा धातून्संप्र-

---

१ पथरी । २ पाषाणभेद । ३ छिना, प्रमेह ।

दुष्यन्प्रमेहान्कुरुतेऽनिलः ॥ देहे चिक्कणता पूर्वं दाहः स्यात्पाणिपादयोः ॥ २९ ॥

## कफच्छिन्नम्।

कासा विपाकाऽरुचिर्वातिनिद्राः सपीनसाः स्युः कफजे प्रमेहे ॥

## पित्तच्छिन्नम्।

दाहव्यथा मेहनवस्तिमध्ये तृष्णाज्वरः पित्तभवे प्रमेहे ॥ ३० ॥

## वातच्छिन्नम्।

हृद्ग्रोधकंपाऽरुचिकासमूर्च्छाशूलानि वातप्रभवे प्रमेहे ॥

## असाध्यमधुमेहः।

कालेन याता मधुमेहतां ते भवन्त्यसाध्या हि तदा प्रमेहाः ॥ ३१ ॥

## मधुमेहः।

मधुमेहं च तं विंद्यात्प्रायो मध्विव मेहति॥ आरोग्यं हि तदा ज्ञेयं यदा मूत्रमनाविलम् ॥ ३२ ॥

## अथ प्रमेहरोगे पथ्यम्।

कुलत्थयवगोधूमचणकाढककोद्रवाः ॥ जांगलं

---

१ छिद्, छेद। २ छिन्नरोगे इ० पा.।

तिक्तशाकानि हिता मुद्गाश्च शालयः ॥ ३३ ॥ आदौ प्रमेहेष्वखिलेषु शस्तं प्रच्छर्दनं वस्तिविरेचने च ॥ फलत्रिकं दारुनिशां समुस्तां निःक्काथ्य पेयं मधुना कफोत्थे ॥ ३४ ॥ पटोलनिंबाऽमलकाऽमृतानां क्काथो हितः पित्तभवे प्रमेहे ॥ श्लेष्मान्तकक्काथनिषेवणेन रक्तप्रमेहः समुपैति शांतिम् ॥ ३५ ॥ क्षौद्रेण पीतः स्वरसो गुडूच्या धात्रीरसो वा रजनीविमिश्रः ॥ फल-त्रिकं वाऽश्मजतुप्रधानं क्षौद्रेण लीढं विनिहंति मेहान् ॥ ३६ ॥

## अथ चन्द्रप्रभा।

विडंगवह्नित्रिफला कटुत्रिकं भूनिंबरास्नासुरदारु-मुस्तकम् ॥ सठीकणाग्रंथिकधातुमाक्षिकं क्षारौ गजाह्वा द्विनिशं पटुत्रिकम् ॥ ३७ ॥ धान्यं संहाचा-तिविषा च सर्वं पृथक् पृथक्कर्षमितं विचूर्ण्य ॥ पलानि शुद्धस्य पुरस्य चाष्टौ शिलाजतु स्याच्च पलत्रिकं हि ॥ ३८ ॥ पलद्वयं लोहरजः पलैकं वंश्याः सिता-यास्तु चतुःपलानि ॥ त्रिवृत्त्रिकुम्भत्रिसुगंधिकानां पृथक्पलं सर्वमिदं विमर्द्य ॥ ३९ ॥ कर्षप्रमाणा

---

१ वमन, उवांत। २ लिसोडा, लहटोरा, सिपिस्तां। ३ दोनो खार। ४ दोनोंहल्दी। ५ तीनोंलोन। ६ वरियाराकी जड। ७ गुंगुर। ८ लोहा-भस्म। ९ गुग्गुर, निसोत, त्रिवृता, इन तीनोको लेना।

गुटिका विधेया चंद्रप्रभेयं विनिहंति मेहान् ॥ प्रासानसाध्यत्वमथो कुपथ्यैररोचकच्छर्दनशूलयुक्तान् ॥ ४० ॥ ग्रंथिमेहनजं कुष्ठं वृद्धिमंत्राण्डजां तथा ॥ कामलापांडुकुष्ठानि प्लीहोदरभगन्दरान् ॥ ॥ ४१ ॥ श्वासं कासं नेत्ररोगाऽग्निमांद्ये मूत्राघातं दारुणं मूत्रकृच्छ्रम् ॥ शूलाऽध्मानं वाश्मरीरोगमुग्रं हन्यादुग्राञ्छुक्ररोगांस्तथैव ॥ ४२ ॥ वंध्यानां पुत्रजननी रजोदोषनिबर्हिणी ॥ इयं रसायनवरा गुटिका संप्रकीर्तिता ॥ ४३ ॥ महानिम्बस्य बीजानां षट् च निष्काःसुपेषिताः ॥ पलं तंदुलतोयस्य घृतं निष्कद्वयं तथा ॥४४॥ एकीकृत्य पिबेत्सर्वं हंति मेहं पुरातनम्॥ मृताऽभ्रं सूतकं तुल्यं धात्रीफलनिजद्रवैः ॥ ४५ ॥ सप्ताहं भावयेत्स्वल्पै रसोयं हरिशंकरः ॥ माषमात्रां वटीं खादेत्सर्वमेहप्रशान्तये ॥ ४६ ॥ रसगंधकयोः पिष्टं तत्समं धूर्तबीजकम् ॥ मर्दितं धूर्ततैलेन कामिनीमदधूनकः ॥ ४७ ॥ वल्लोऽस्य सितया युक्तः सर्वान्मेहान्निकृंतति ॥ द्रावणो मैथुने स्त्रीणां सेवनाद्वीर्यदार्ढ्यकृत् ॥ ४८ ॥ प्रातः पिबेत्पुष्करमूलचूर्णं पथ्यां च रात्रौ प्रतिवस्तमत्ति ॥ तस्य

---

१ नया नीमका बीज । २, ३६ मासा ३ तोला भर । ३ निष्क, चारमासेभरका होताहै । ४ पारा । ५ धतूरकाबीज ॥

प्रमेहाः प्रलयं प्रयांति पापानि शंभोःस्मरणाद्यथार्थात ॥ ४९ ॥ वितुन्नकं जीरकयुग्ममिश्रं भुक्तं हरेत्पित्तविकारमेहान् ॥ पलं तिलानामशितं प्रभाते निहंति मेहं बहुमूत्रतां च ॥ ५० ॥ लिह्याद्भस्मापि वंगस्य मधुमेहविनाशनम् ॥ अथवा बीजकाष्टस्य क्वाथं बोलयुतं पिबेत् ॥ ५१ ॥

## अथाऽपथ्यम् ।

सौवीरकं सुरा तक्रं दधि क्षीरं घृतं गुडम् ॥ अम्लेक्षुरसपिष्टान्नाऽतपमांसानि वर्जयेत् ॥ ५२ ॥

इति श्रीगौडवंशाऽवंतसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे मूत्रकृच्छ्रमूत्राघाताऽश्मरीप्रमेहनिदानचिकित्साकथनं नाम नवमोल्लासः ॥ ९ ॥

---

## अथ मेदोनिदानचिकित्सा ।

मधुरान्नदिवास्वप्नश्लेष्मलाऽहारसेविनः॥ अव्यायामदधिस्नेहैः प्रायो मेदोऽभिवर्धते ॥ १ ॥ मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितः ॥ अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ २ ॥ मेदसावृतमार्गत्वात्पुष्यंत्यन्नेन धातवः ॥ मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥ ३ ॥

---

१ गोखरू छोटा । २ अष्टवीज । ३ बियाबोलदवा । ४ कांजी ।

## अथ मेदोरोगपथ्यम् ।

कुलत्थमुद्गायवशालयश्च व्यायामचिन्ताश्रममैथुनानि॥ क्षौद्रं तथा जागरणानि वस्तिर्मेदस्विनो सेव्यमिदं सदा वै॥४॥ विडंगधात्रीफलनागराणि क्षारो यवा लोहरजो मधूकम् ॥ चूर्णानि हन्यान्मधुनावलीढं मेदोऽतिवृद्धिं कृमिजांश्च रोगान् ॥ ५ ॥ क्षारमेरंडपत्रस्य भक्तमण्डेन यः पिबेत्॥ हिंगुयुक्तं निहंत्याशु मेदोवृद्धिं नरस्तु सः॥६॥शीताम्बुना क्षौद्रमतिप्रभाते संसेवितं स्थौल्यनिवारणं स्यात् ॥ यवान्नमंडो घृतमुष्णपेयाः पीता हि मेदोगदनाशनाः स्युः ॥ ७ ॥

## अथ मेदोवृद्धावुद्वर्तनम् ।

श्रीवासशैलेयकदारुकौन्तीस्पृक्काब्दकुष्ठाऽगरुकेसराणि ॥ त्वक्पत्रपुष्पणि तथा लवंगं धत्तरपत्रस्यरसेन मर्द्यम् ॥ ८ ॥ उद्वर्तनं गाढमतिप्रयुक्तं स्थौल्यादिरोगं विनिहन्त्यवश्यम् ॥ ९ ॥

## अथ देहदुर्गंधलेपः ।

वासकस्वरसोलेपाच्छंखचूर्णसमन्वितम् ॥ बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥१०॥ अलंबुषा-

---

१ दंडकसरत । २ मधूक महुँआ । ३ मातका माड । ४ सरलवृक्षरस, टारपिंन, सरलवृक्षका गोंद । ५ शिलाजीत वा छरीला, मेनशिल । ६ कौंती, रेणुका, गुलाबीमिरचि । ७ उपटंन लेप । ८ मोटापन ।

याश्चूर्णं वा निपीतं कांजिकैः सह ॥ दौर्गंध्यं नाशयत्याशु दुष्टमेदोभवंनृणाम् ॥११॥ शिरीषलोध्रकोशीरपत्रैलामज्जकेसरैः ॥ उद्वर्तनं हरेत्स्थौल्यं स्वेददौर्गन्ध्यनाशनम् ॥ १२ ॥ हस्तपादोत्थिते स्वेदे गुग्गुलुः पंचतिक्तकः ॥ योज्यो हि भिषजा नित्यं मेदोवृद्धिहरः परम् ॥ १३ ॥

## अथोदरनिदानचिकित्सा ।

मंदेऽनलेऽजीर्णसमुद्भवः स्यात्तस्मादजीर्णान्मलसंचयश्च ॥ तेन प्रकोपं समुपेत्य दोषा निर्हत्य वह्निं जठराणि कुर्युः ॥ १४ ॥

## पित्तोदरम् ।

पित्तोदरे दाहमदातिसारभ्रमज्वरास्तृट्कटुता मुखे स्युः ॥ दोषैःपृथक्संमिलितैश्च बद्धक्षतोदकप्लीहभिरष्ट तानि ॥ आध्मानमालस्यमसक्तिसादा विड्रोधितृट् दाहगदा हि पूर्वम् ॥ १५ ॥

## वातोदरम् ।

वातोदरे पादकरेषु नाभ्यां शोफोंगमर्दोऽरुचिगौरवाणि ॥

---

१ मानुफर । २ भवेत् इ० पा० । ३ दुर्गन्ध इ० पा० । ४ निहन्ति । ५ पेटका फूलना ।

## श्लेष्मोदरम्।

श्लेष्मोदरे गौरवमंगसादः श्वासोऽरुचिः पीनसकासशोफाः ॥ १६ ॥

## जलोदरम्।

दुष्टांबुदूषीविषसेवनाद्वा विण्मूत्ररोधादिगरप्रदानात् ॥ दोषाः प्रदुष्टा जठरं प्रकुर्युर्दूष्योदरं सर्वभवं वदंति॥१७॥निरेति कृच्छ्रेण गुदाद्विडल्पं हन्नाभिमध्ये जठरस्य वृद्धिः ॥

## बद्धोदरम्।

बद्धोदरं बद्धगुदं तदेतत्क्षतोदरं शल्यशराऽभिघातैः ॥ १८ ॥ तस्मात्क्षतांत्रात्स्रवणं गुदे स्यान्नाभेरधस्ताडुदरस्य वृद्धिः ॥ वांतो विरक्तोप्यनुवासितो वा यः स्नेहपीतः सलिलं सुशीतम् ॥ १९॥ पिबेत्ततस्तस्य जलावहेषु स्रोतःसु दुष्टेषु जलोदरं स्यात् ॥ भृशोन्नतं स्निग्धविवृत्तनाभिप्रपूर्णमम्भोभिरिवायतं तत् ॥ २० ॥ यथा दृतिः क्षुभ्यति कंपते च जलोदरं शब्दयुतं तथा स्यात् ॥ विदाह्यभिष्यंदिभिरन्नपानैर्नरस्य दुष्टं रुधिरं कफश्च ॥ २१ ॥ प्लीहाभिवृद्धिं कुरुते यत-

---

१ बडी गर्मी। २भूख न लगना। ३नाकसे लोहू गिरना। ४चामकी थैली.

स्तत्प्लीहोदरं वृद्धिमुपैति वामे ॥ २२ ॥ स्नेहः स्वेदो रेचनं वस्तिकर्म पूर्वं योज्यं वातपित्तोदरेषु ॥ भोज्यं देयं दीपनं वा लघु स्याद्गोधूमा वै शालयः षष्टिकाश्च ॥ २३ ॥ एरण्डतैलं दशमूलमिश्रं निहंति वातोदरशोफशूलम् ॥ गोमूत्रयुक्तत्रिफलारसो वा क्वाथो निहन्याद्दशमूलजो वा ॥२४॥ तत्रौष्ट्रकं दुग्धमतः प्रशस्तमाजं पयो वा जठराणि हन्यात ॥ २५ ॥ पित्तोदरविनाशाय पंचमूलीशृतं पयः ॥ पित्तोदरे घृतं पेयं मधुरद्रव्यसाधितम् ॥ २६ ॥ एरण्डतैलं सक्षारं पीतं हंति कफोदरम् ॥ व्योषयुक्तं कुलत्थाम्बु पयो वा भोजने हितम् ॥२७॥ रोहीतकहरीतक्योः कल्कं मूत्रेण भावितम् ॥ पीतं सर्वोदराण्याशु प्रमेहार्शःकृमीञ्जयेत् ॥ ॥२८॥ विरेकास्थापने स्वेदः सर्वेषु जठरेषु च ॥ माषं शाकं तिलान्पिष्टं विदाहीनि गुरूणि च ॥ २९ ॥ व्यायामाध्वदिवास्वापात्तोयपानं विवर्जयेत् ॥ जठराणां मलाढ्यत्वाद्बहुशः शोधनं हितम् ॥ ३० ॥ एरण्डतैलं पयसा जलेन मूत्रेण पीतं जठरं निहन्ति ॥ ज्योतिष्मतीतैलमिदं तथैव सर्वोदराणां प्रशमार्थमुक्तम् ॥३१॥ कंकुष्ठचूर्णं संसेव्य जलेनोष्णेन मानवः ॥

---

१ शोथ । २ ऊटनीकादूध । ३ छेडीदूध । ४ कालेफूलका करंज रोहेका वृक्ष । ५ मांसम्—इ० पा० । ६ मालकांगणिका तेल । ७ मुरंदाशंग ।

अष्टभ्यो जठरेभ्यश्च शीघ्रं कुर्याद्विमोक्षणम् ॥ ३२ ॥ वाते सिंधुकणायुतं समरिचं पित्ते सिताढ्यं कफे व्योषाजाजियवानिकाऽग्निहपुषा युक्तं च तक्रं पिबेत् ॥ क्षारव्योषकसैंधवान्वितमिदं तत्सन्निपातोदरे दीप्याः सैंधवजीरकाऽग्निहपुषा युक्तं च बद्धोदरे॥३३॥ क्षतोदरे माक्षिकपिप्पलीभ्यां तक्रं पिबेद्रोगनिवारणाय ॥ जलोदरे चापि पिबेच्च तक्रं सक्षारकं त्र्यूषणसैंधवं च ॥ ३४ ॥ सैंधवं चार्कपत्राणि पयः स्नुह्या विपाचितम् ॥ मस्तुना परिपीतं वै प्लीहानं हंति दारुणम् ॥ ३५ ॥ शाल्मलीकुसुमं स्विन्नं निशि पर्युषितं तथा ॥ तिक्ताचूर्णेन संयुक्तमद्यात्प्लीहप्रशांतये ॥ ३६ ॥ चव्यचित्रकसंयुक्तं प्रातरुत्थाय यः पिबेत् ॥ तस्य नश्यन्ति सर्वाणि जठराणि न संशयः ॥ ३७ ॥

## अथ वज्रक्षारः ।

स्नुह्यर्कदुग्धैर्लवणानि पंच विभावयेत्सप्तदिनं ततस्तैः॥प्रपूर्य वज्रीशकलानि वह्नौ पचेद्धि यामं पुटपाकरीत्या ॥ ३८ ॥ सुशीतमाकृष्य विचूर्णितं तत्कर्षप्रमाणं परिभक्षणीयम् ॥ अष्टोदरे पंचविधे च गुल्मे शूले विषूच्यां श्वयथौ प्रतून्याम् ॥ ३९ ॥ यवक्षारः प्लीहहरः पलाशक्षारसंयुतः ॥ कणारसो निशाचूर्णयुक्तः

१ सजावदही, साढीवालीदही। २ पिल्ही, वरवट। ३ कर्ष, एक तोला। ४ रोहुआंवृक्ष, सोनियाघास।

प्लीहाऽपचीहरः ॥ ४० ॥ प्लीहहा शरपुंखायाः कल्को मूत्रेण सेवितः॥ पक्वाऽम्रस्य रसो हंति प्लीहानं मधुसंयुतः ॥ ४१ ॥ पलद्वयं भानुपयः पलानि स्नुहीपयः षट्त्रिवृता च पथ्या॥ कंपिल्लदन्ती गिरिकर्णिकाऽग्निश्यामास्तथा शंखिनि नीलिनी च ॥ ४२ ॥ प्रत्येकमेषां तु पलप्रमाणं विपाचयेत्प्रस्थमिदं घृतं च॥ चतुर्गुणं वारि च संप्रयुक्तं पक्वाशनैर्बिंदुमितिप्रदेयम्॥ ॥ ४३ ॥ कोष्ठेतिदुष्टे जठरे सशोफे भगंदरे गुल्मगदे च दुष्टे॥ बिंदून्पिबेद्यावत एव तावद्वारान्विरेकाश्च भवंति पुंसः॥४४॥ एतद्बिंदुघृतं नाम येनाऽभ्यक्तो विरच्यते प्लीहनाशकरी सर्वा क्रिया यकृति चेष्यते ॥ ४५ ॥

## अथ पुनर्नवादिकाथः।

पुनर्नवानिंबपटोलशुंठीतिक्ताऽमृतादार्व्यभयाकषायः ॥ सर्वांगशोफोदरकासशूलश्वासान्वितं पांडुगदं निहन्ति ॥ ४६ ॥

## लेपः।

देवदारुपलाशाऽर्कराजपिप्पलिशिग्रुभिः ॥ साऽश्वगंधैः सगोमूत्रैर्लेपः स्यादुदरापहः ॥ ४७ ॥

---

१ प्लीहा फीहा, फीयारोग, कछुईरोग। २ रूपमंजरीलता। ३ संखाहुली। ४ लीलवृक्ष। ५ एकबूंद। ६ सिंहलीपीपरि।

## अथाऽसाध्यः।

पक्षादूर्ध्वं वद्धगुदं सर्वजातोदकं तथा ॥ जन्मनैवोदरं सर्वं प्रायःकृच्छ्रतमं मतम् ॥ ४८ ॥

## अथ दूषीविषशोफः।

क्षाराऽम्लतीक्ष्णोष्णविरुद्धदुष्टगरोपसृष्टान्ननिषेवणेन ॥ वायुः प्रदुष्टः कफपित्तरक्तान्यानीय दुष्टानि बहिः शिरासु ॥ ४९ ॥ ऊर्ध्वं व्रजंस्त्वक्पिशिताश्रयं च शोफं प्रकुर्याद्घनमुन्नतं हि ॥ दोषैः पृथक्द्वंद्वसमस्तघातैस्तथा विषैः शोफगदा भवंति ॥ ॥ ५० ॥ पूर्वं भवेद्गौरवमंगसादने सोत्सेधमूष्मा च शिरातनुत्वम् ॥ प्रसुप्तिहर्षाऽर्तियुतो हि वातात्पित्ताच्च शोफो भृशदाहपाकः ॥ ५१ ॥ कफात्स्थिरः पांडुररोचकान्वितो द्वाभ्यां समस्तैश्च विमिश्रलिंगः ॥ ५२ ॥ शस्त्रादिच्छेदभेदेन क्षतेनाघातजः स्मृतः ॥ सविषप्राणिदंष्ट्रादिभल्लातार्द्यैर्विषोद्भवः ॥ ५३ ॥ वातोद्भवे पिबेत्पूर्वं मासाऽर्द्धं त्रिवृतां तथा ॥ तैलमेरण्डजं वापि स्वेदाभ्यंगांश्च योजयेत् ॥ ५४ ॥ त्रिवृद्गुडूचीत्रिफलाकषायं पिबेत्तथा पित्तकृते च शोफे ॥ गव्येन

१ गरकाटनेवाला । जैसे जिमीकन्द आदि । २ देहमें, देहठहर, देहका भारीहोना । ३ भेलाआदिवृक्षके दूध लगनेसे विष होताहै ।

मूत्रेण फलत्रिकं तु पीतं कफोत्थं श्वयथुं निहन्यात् ॥५५॥ मिश्रे मिश्रक्रमं कुर्यात्सर्वजे सर्वमेव च ॥शिग्रुजे त्वक्कणासिद्धा पिण्याको वा प्रलेपनम् ॥ ५६ ॥ कणा गजाह्वा रजनी सपाठा निदिग्धिका नागरमूलमुस्तम् ॥ कटुत्रिकं जीरकवह्नितिक्तं चूर्णं निहन्याच्छ्वयथुं त्रिदोषम् ॥५७॥ कुर्यादागंतुजे शोफे सेकलेपादिशीतलम् ॥ भल्लातकभवं शोफं सतिला हन्ति मृत्तिका ॥ ५८ ॥ यष्टीदुग्धतिलैर्लेपो नवनीतयुतो हरेत् भल्लातकभवं शोफं चूर्णं शालिदलस्य च ॥ ५९ ॥ पथ्याऽमृतावह्निमहौषधानां दार्वीनिशादारुपुनर्नवानाम् ॥ क्काथं पिबेत्पादकरोदरस्थे वक्राश्रिते सर्वभवे च शोफे ॥ ६०॥ निशाद्वयं चन्दनयुग्मलोध्रं पुनर्नवोशीररसांजनानि ॥ मूर्वाशिवागैरिकपद्मकानि लेपो हितः सर्वभवे हि शोफे॥६१॥ सेकस्तथा निम्बपुनर्नवाऽर्कक्काथेन सर्वानपि हंति शोफान्॥ सुखोष्णगोमूत्रकृतो हि सेको रसो हितो मूलकपत्रजो वा॥६२॥ गोमूत्रसिद्धं मंडूरं लिह्यात्क्षौद्रेण शोफवान् ॥ पुराणयवशाल्यन्नभोजनं शोफिनां हितम् ॥ ६३ ॥

१ सोथ। २ पिण्याक। दोहा—हींग उष्ण औषध खरी, तिलकाठाको जान। केसरसहितमिलायकै यहपिण्याकबखान ॥ १ ॥ ३ छोटीकटेरी। ४ शालदल, शाखूवृक्षका पत्ता। ५ शोफ, शोथ, सूजन, फूलना। ६ दारुहरदी वा हरदी। ७ लाल वा सफेदचंदन।

## अथ त्याज्यानि ।

पिष्टान्नं लवणं मद्यं दिवास्वप्नमजांगलम् ॥ पयोदधि गुडं तैलं शोफवान्वर्जयेद्बहून् ॥ ६४ ॥ गुडाऽर्द्रकं हरेच्छोफं गुडश्यामा गुडाऽभया ॥ गुडशुंठी पृथक्कर्षवृद्ध्या खादेत्पलत्रयम् ॥ ६५ ॥ पक्षं वा मासमेकं वा शोफान्हंति सुदारुणान् ॥ जीर्णज्वराऽर्शोग्रहणीश्वासाऽरोचकपीनसान् ॥ ६६ ॥

## अथांडवृद्धिरोगचिकित्सा ।

वायुश्चाधोगतः क्रुद्धः शोफशूलकरश्चरन् ॥ प्राप्य वंक्षणतो मुष्कौ धमनीं फलकोशगाम् ॥६७॥ प्रपीड्य कुरुते वृद्धिं महतीं फलकोशयोः ॥ अंडवृद्धिस्तु सा ज्ञेया भाराध्वांगविवर्तनैः ॥ ६८ ॥ वातलैरन्नपानाद्यैः क्षोभितः पवनो यदा ॥ अथान्त्रं द्विगुणीकृत्य स्वनिवेशादधो नयेत् ॥६९॥ कुर्याद्वंक्षणसंधिस्थमंत्रं ग्रंथिनिभं तदा ॥ प्रपीडितोंतःस्वनवान्वायुर्याति पुनश्च सः ॥ ७० ॥ मुष्कौ प्रध्मापयन्नेति सांत्रवृद्धिरुदीरिता ॥ सूक्ष्मकृष्णाऽरुणशिरातंतुजालगवाक्षितम् ॥ ॥ ७१ ॥ एरण्डतैलं तत्रादौ मासैकं पयसा पिबेत् ॥ मंडादिक्रमदीप्ताऽग्निवस्तिभिस्समुपाचरेत ॥ ७२ ॥

१ नाकसे छोहूटपकना । २ अडुवेकी बढाव बैजाका, फूलना ।

गुग्गुलुं रुबुतैलं च गोमूत्रेण पिबेन्नरः ॥ अण्डवृद्धिं निहंत्याशु सशूलां चिरकालजाम् ॥ ७३ ॥ चन्दनं कमलोशीरं मधुकं पद्मकं तथा॥ क्षीरपिष्टः प्रलेपस्स्याद्दाहशोफरुजां हरः ॥ ७४ ॥ पंचवल्कलचूर्णेन सघृतेन विलेपनम् ॥ तेषां क्वाथेन शीतेन कर्तव्यं परिषेचनम् ॥ ७५ ॥ पुनर्नवैरण्डफलं तिलांश्च पिष्ट्वाऽरनालेन जवस्य चूर्णम् ॥ लेपो सुखोष्णो विनिहंति वृद्धिं तथा वचासर्षपकल्कलेपः॥ ७६ ॥ रास्नाऽमृतेरण्डबलायष्टीगोक्षुरसाधितः ॥ क्वाथो हन्यादन्त्रवृद्धिं रुबुतैलसमन्वितः ॥ ७७ ॥ तैलं नारायणं योज्यं पानाऽभ्यञ्जनवस्तिषु ॥ आर्द्रकं कट्फलं वापि त्वन्त्रवृद्धिनिवृत्तये ॥ ७८ ॥ गुर्वन्नसेवनात्क्रुद्धो दोषो वंक्षणसंधिगः ॥ करोति ग्रंथिवच्छोफं तं वर्ध्मेति विनिर्दिशेत् ॥ ७९ ॥ रुबूकतैलेन संभ्रष्टः पथ्याकल्कः कणान्वितः ॥ सैन्धवेन समायुक्तो वर्ध्मरोगहरः परः ॥ ८० ॥

इति श्रीगौडवंशाऽवतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे उदरशोफवर्ध्मनिदानचिकित्साकथनं नाम दशमोल्लासः ॥ १० ॥

---

१ रेंणीका तेल । २ पंचवल्कल, पाकरि १, पीपर २, गूलर ३, बरगद ४, बेतंस५, ये हैं । ३ धोवना । ४ कांजीसे ।

## अथ गलगंडरोगचिकित्सा ।

कफवातौ गले दुष्टौ मेदःशोणितमास्थितौ ॥ कुर्वाते ग्रंथिवच्छोफं सुष्कवच्छंवते तु यः ॥ १ ॥ महान्वा यदि वा ह्रस्वो गलगंडं तमादिशेत् ॥ चिरवृद्धिः प्रपाकः स्यात्तथा पारुष्यसंयुतः ॥ २ ॥

## उपचारः ।

मूलकस्य च बीजानि शणबीजाऽतसीयवान् ॥ सिद्धार्थशिग्रुबीजानि तक्रेणाऽम्लेन पेषयेत् ॥ ३ ॥ गंडमाला ग्रंथिगंडा विलयं यांति लेपनात् ॥ ४ ॥

## अथ हिंस्रादितैलम् ।

हिंस्रावचाऽग्नित्रिफलाऽमृतापिप्पलिदारुकैः॥ सार्क-वस्वरसैः सिद्धं तैलं मधुयुतं तथा ॥ लेपतो नस्यतो वापि गलगंडं निवारयेत् ॥ ५ ॥ कोलाऽमलककर्कंधू-मानैर्मन्यागले तथा ॥ कक्षांसवंक्षणे मेदःकफाभ्यां मंदपाकतः ॥६॥ स्याद्गण्डमाला बहुभिर्गण्डैस्ते ग्रन्थ-यश्चिराद् ॥ अवाप्तपाकास्ते केचित्स्रवंति प्रभवंति च ॥ ७ ॥ सैवाऽपचीति कथिता चिरकालानुबंधतः ॥

---

१ कठोर । २ पटशण, पेटुआ । ३ गंडमाला, कंठमालाफोडा । ४ ग्रंथिगंड, गलेकी कठोरगांठ । ५ जटामासी । ६ चीढ, मिट्टीके तेलकी सम्धूक जो बनके आती है वह लकडी । ७ कखँरवार, कखलाई ।

सर्षपान्निम्बपत्राणि दग्ध्वा भल्लातकानि च ॥ ८ ॥ छागमूत्रेण संपिष्टमपचीघ्नं प्रलेपनम् ॥ अलम्बुषाद- लोद्भूतस्वरसाऽर्द्धपलं पिबेत् ॥ ९ ॥ अपच्यां गण्डमा- लायां कामलायां च गण्डके ॥ चन्दनं च वचा पथ्या द्राक्षा कटुकरोहिणी ॥ १० ॥ तैलमेभिः शृतं पीतं समूलामपचीं हरेत् ॥ मधुना सघृतः पीतः क्वाथो वरुण- मूलजः ॥ ११ ॥ चिरोत्थितां गण्डमालामपचीं नाश- येद्ध्रुवम् ॥ कांचनारत्वचं पिष्ट्वा पिबेत्तंदुलवारिणा ॥ ॥ १२ ॥ पलार्द्धं वा पलं वापि मुच्यते गण्डमालया ॥ अलाबुदुग्धं जपापुष्पं तैलं क्षाररसं समम् ॥ १३ ॥ एभिस्सप्तदिनैर्लिप्ता गंडमाला शमं व्रजेत् ॥ छुच्छुंद- र्यास्तु तैलेन लिप्ता नाशं व्रजेदियम् ॥ १४ ॥

## अथार्बुदनिदानचिकित्सा ।

मेदोऽस्रमांसानि शिराः प्रदूष्य वातादयो विग्रथितं च शोफम्॥ कुर्वन्ति वृत्तोन्नतमेनमाहुर्ग्रंथिं बुधा मन्दवि- पाकमेव ॥१५॥ गात्रदेशे क्वचिद्दोषा मूर्च्छिता मांसशो- णितम् ॥ संदूष्य कुर्वते वृत्तं मांसोच्छ्रायं तदर्बुदम्॥१६॥ महामूलं मंदरुजं ग्रंथितुल्यं घनोन्नतम् ॥ मुष्टिकाष्ठैः प्रहाराद्यैर्मांसं दुष्टमवेदनम् ॥१७॥ शोफं संजनयेच्छीघ्रं तदुक्तं मांसजाऽर्बुदम् ॥ १८ ॥ मूलकक्षारसंयुक्ता स्व-

१ अपची । २ अडहूल । ३ गलितकोढ

जिंका शंखचूर्णकम् ॥ एषां हि विहितो लेपो निर्हंति ग्रंथिमर्बुदम् ॥ १९ ॥ दन्त्यऽग्निभल्लातकभानुवश्रीदुग्धं गुडः कासिसमं च सर्वम् ॥ पिष्ट्वा प्रलेपो विहितो नराणां विद्रावयेद्ग्रंथिमतिप्रवृद्धम् ॥ २० ॥ उपाचरेद्विद्रधिवत्प्रच्छानादिभिरर्बुदम् ॥ क्षाराऽग्निभ्यां दहेद्वापि स्वेदैर्नानाविधैर्जयेत् ॥ २१ ॥ नाड्यां स्वेदं विधायाऽस्त्रं शृंगेर्णं बहुशो हरेत् ॥ २२ ॥ सर्जरसः प्रियंगुश्च गुग्गुलुर्यष्टिकाह्वयम् ॥ सूक्ष्मीकृतं प्रलेपेन हंति सर्वाऽर्बुदानि तु ॥ २३ ॥ हरिद्रालोहपत्तंगगृहधूममनशिलाः ॥ मधुप्रगाढो लेपोयं मंदोर्बुदहरः परः॥२४॥स्नुहीगंडीरकास्वेदो नाशयेदर्बुदानि च॥लवणेनाऽथवा स्वेदः सीसकेन तथैव च ॥ २५ ॥ हरिद्रामूलकक्षारः शंणचूर्णसमन्वितः॥ सप्तरात्रप्रयोगेण लेपः सिध्माऽर्बुदापहः ॥ २६ ॥ उपोदकाकांजिकतक्रपिष्टा तयोपनाहं लवणेन सार्द्धम् ॥ दुष्टाऽर्बुदानां प्रशमाय कुर्याद्दिनेदिने रात्रिषु मर्मजानाम् ॥ २७ ॥ शिग्रुमूलकयोर्बीजं रक्षोघ्नं सुरसं यवम् ॥ अश्वमारं च संपिष्य तक्रैर्लेपोऽर्बुदादिजित् ॥ २८ ॥

---

१ काटनेमाली। २ सैंन। ३ नली बासकी चोंघी। ४ सीगीसे खोहू निकाला। ५ गंडीरक, वासुदीकान बनसूरन। ६ सेहुंआ। ७ हींग ३ः

## अथ श्लीपदनिदानचिकित्सा ।

मेदोमांसाश्रयं शोफं पादयोः श्लीपदं वदेत् । पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥ २९ ॥ ये देशास्तेषु जायंते श्लीपदानि विशेषतः ॥ च महत्त्वं च श्लीपदेषु कफाद्भवेत् ॥ ३० ॥ संस्वेदनाऽभ्यंजनलंघनैश्च विरेचनै रक्तविमोक्षणैश्च ॥ रुक्षैस्तथा चोष्णहरैः प्रलेपैरुपाचरेच्छ्लीपदमेवमादौ ॥ ॥ ३१ ॥ गोमूत्रेण पिबेन्मासं तैलमेरण्डसंभवम् ॥ यद्वा गुल्फोपरि शिरां व्यधयेच्चतुरंगुलाम् ॥ ३२ ॥ कासमर्दशिफाकल्कं गव्येनाज्येन यः पिबेत् ॥ श्लीपदं सत्वरं तस्य नाशमायाति चाद्भुतम् ॥ पथ्याकल्कं पिबेद्वापि गोमूत्रेण गुडूचिकाम् ॥ ३३ ॥ विश्वौषधं सर्षपदेवदारुशिग्रूश्च मूत्रेण विपिष्य लेपः ॥ दुष्टं जयेच्छ्लीपदमाशु यद्वा पुनर्नवासर्षपशुण्ठिलेपः ॥ ३४ ॥ पिबेत्सर्षपतैलं तु श्लीपदानां निवृत्तये ॥ सप्तताम्बूलपत्राणां कल्कं तप्तेन वारिणा ॥३५॥ हरिद्रां गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ॥ वर्षोत्थं श्लीपदं हन्ति दद्रुम्कुष्ठं विशेषतः ॥ ३६ ॥ वृद्धदारुकचूर्णं वा मूत्रं सौवीरकादिभिः ॥ यवान्नं कटुतैलेन कूर्ममांसं च तं

---

१ पीळपांव । २ जटा, जड ।

जयेत् ॥ ३७ ॥ श्लीपदानां प्रशान्त्यर्थमशान्तौ दाहमग्निना ॥ ३८ ॥

## अथ विद्रधिरोगनिदानचिकित्सा।

त्वग्रक्तमेदःपिशितानि दुष्टाः दोषाः प्रदुष्यास्थिसमाश्रिता हि ॥ शोफं शनैः संजनयंति घोरं वृत्तं रुजावंतमथायतं वा ॥ ३९ ॥ स विद्रधिः षड्विधमेव दोषैः पृथक्समस्तैः क्षतशोणिताभ्याम् ॥

## अथ वातविद्रधिः।

कृष्णाऽरुणो वा भृशवेदनः स्याद्वातोद्भवो विद्रधिरुत्थितश्च ॥ ४० ॥

## पित्तविद्रधिः।

श्यावो दाहज्वरयुतो विद्रधिः पित्तसंभवः ॥

## कफविद्रधिः।

शरावसदृशः स्निग्धो विद्रधिः कफसंभवः ॥४१॥ घाटालो विषमःपाको विद्रधिः सान्निपातिकः ॥ ज्वरस्तृष्णा च दाहश्च क्षतोत्थे विद्रधौ भवेत् ॥ ४२ ॥ व्यथादाहज्वरकरो रक्तविद्रधिरुच्यते ॥४३॥ पृथक्संभूय

---

१ चमडा  २ लोहू।  ३ चर्बी।  ४ मांस।  ५ सराव, कोशा या दीया।  ६ घाँटीके रूप।

वा दोषा उच्छ्रिता गुल्मरूपिणम् ॥ वल्मीकवत्समुन्न-द्धमन्तः कुर्वन्ति विद्रधिम् ॥ ४४ ॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वंक्षणयोस्तथा ॥ वृक्कयोः प्लीह्नि यकृति हृदये क्लोम्नि वा तथा ॥ ४५ ॥ तेषामुक्तानि लिंगानि बाह्यविद्रधिलक्षणैः ॥ नाभेरुपरिजाः पक्का यान्त्यू-र्ध्वमितरे त्वधः ॥४६॥ अधःस्रुतेषु जीवेत्तु स्रुतेरूर्ध्वं न जीवति ॥ हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥ ४७ ॥ जीवेत्कदाचित्पुरुषो नेतरेषु कथंचन ॥ जलौकःपातनं रक्तं सर्वस्मिन्नेव विद्रधौ ॥४८॥ मृदु-र्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ अपक्के विद्र-धौ युंज्याद्व्रणशोफवदौषधम् ॥ ४९॥ स्वेदोपनाहायव-शिग्रुमूलगोधूमसुद्गैश्च घृतेन युक्तैः ॥ लेपा विधेयास्त्वथ वीक्षणेन विलीयते विद्रधिरोग एषः ॥ ५० ॥ पुनर्नवा-नागरदारुपथ्याद्विपंचमूलैश्च कृतः कषायः॥ सगुग्गुलुर्वै रुबुतैलमिश्रः पीतो जयेन्मारुतविद्रधिं च ॥ ५१ ॥ प्रलेपः क्षीरसंपिष्टैर्मधुकोशीरचन्दनैः ॥ पैत्तिके विद्रधौ कार्यः शतधौतघृतेन च ॥ ५२ ॥ पिबेद्वा त्रिफला-

---

१ व्यमौटि । २ पलैया, प्लीहा, तापतिल्ली । ३ कोषके दहिने तरफ मांसखंड कलेजेके सामने हृदयके दाहिनी ओर । ४ छातीके भीतर १ स्थानहै जहां बुद्धि वा जीवका मिलाव होताहै । ५ फुफुस, फेंफडा । ६ उपनाह । पट्टीबांधना ।

क्वाथं त्रिवृत्कल्काक्षसंयुतम् ॥ गोशकृन्मूत्रसिकता-लोष्टैः संस्वेदनं हितम् ॥ ५३ ॥ दशमूलीकषायो वा प्रशस्तः श्लेष्मविद्रधौ ॥ हिंगुसैंधवकाशीसशिलाजतु-समन्वितः ॥ वरुणस्य त्वचा क्वाथः जयेदन्त-रविद्रधिम् ॥ ५४ ॥ हरीतकीसैन्धवधातकीनां रजो घृतक्षौद्रयुतं निहंति ॥ अन्तर्भवं विद्रधिमुग्रशोफं समाक्षिकं हंति च शिग्रुमूलम् ॥ ५५ ॥ विद्रध्योः कुशलः कुर्याद्रक्ताऽगंतुनिमित्तयोः ॥ पित्तविद्रधिव-त्सर्वां क्रियां निरवशेषतः ॥ ५६ ॥ दन्तीचित्रक-गोदन्तचिरविल्वाँऽश्वमारकान् ॥ अम्लपिष्टाञ्छिदे-द्विद्वान्सशोफं पक्वमानतम् ॥ ५७ ॥ द्विपंचमूली-त्रिफलाकुलत्थत्रिवृद्यवैर्भूर्ज्जकशिग्रुयुक्तैः ॥ तैलं तिलै-रण्डजमेतदेभिः सिद्धं हितं विद्रधिगुल्मशूले ॥ ५८ ॥ शरीराऽगंतुभेदेन विज्ञेयो द्विविधो व्रणः ॥ दोषैरा-द्यस्तयोरन्यः शस्त्रादिक्षतसंभवः ॥ ५९ ॥ वातात्तो-दः श्यावता स्फोटनं स्यात्पित्तात्तृष्णामोहदाहज्वराः स्युः ॥ स्निग्धः पाण्डुः श्लेष्मणोऽथ व्रणः स्याद्रक्ता-द्रक्तं स्रावयुक्तोऽतिदाहः ॥ ६० ॥ दुष्टव्रणे शोणितपूति-पूयस्रावश्च शोथो भृशगंधता स्यात् ॥ शुद्धे व्रणे पूर्व-

---

१ रेत, बालू। २ करंजवृक्ष।

विपर्ययः स्याद्दंतास्तथा क्लेदविवर्जिताःस्युः ॥ ६१ ॥ व्रणो बंधेन मृदुतां याति शुध्यति रोहति ॥ तस्माद्यत्नेन मतिमान्पट्टबंधं च कारयेत् ॥ ६२ ॥ कुर्याद्विलेपनं पूर्वं द्वितीयमवसेचनम् ॥ तृतीयमुपनाहं च चतुर्थीं पाटनक्रियाम् ॥ ६३ ॥ पंचमं शोधनं षष्ठं रोपणं क्रम इष्यते॥व्रणो वातभवे कार्यो लेपश्शाखोटकत्वचः ॥६४॥ लेपो हितः पित्तकृते च दूर्वानालीकयष्टीमधुचन्दनैश्च ॥ लेपः कफोत्थे सरलाजगंधा कालाऽजशृंगीहयगंधिकाभिः ॥ ६५ ॥ औदुंबराऽश्वत्थवटीवटानां संवेतसंवल्कलमम्बुपिष्टम् ॥ लेपः प्रयोज्यः सघृतो व्रणे च ह्यागंतुके रक्तभवे च शोफे ॥६६॥ विधिर्विषघ्नो विषजे पित्तघ्नो वा हितो विधिः ॥ स्निग्धाऽम्ललवणैर्वाते पित्ते शीतः पयोयुतः ॥ ६७ ॥ क्षारमूत्रयुतः कोष्णः कफे स्निग्धत्वशान्तये ॥ कठिनानां च शोफानां दारुणानां रुजावताम् ॥ ६८ ॥ स्वेदं विधाय पाकाऽर्थं कुर्याच्छोणितमोक्षणम्॥अन्तःपूयेषु रोगेषु भेदनं शस्तमुच्यते॥६९॥कपोतकंकगृध्राणां विङ्क्षारो विदारणम्॥ अत्यर्थकठिने शोफे हस्तीदन्तप्रलेपनम् ॥७०॥ यवगोधूममाषाणां चूर्णलेपः प्रशस्यते ॥ न चापि मुखमालिंपे-

---

१ केपडेकी पट्टी । २ करेसुआशाग । ३ धूपकाठ । ४ वरोंह । ५ काटनेवालीक्रिया । ६ कबूतरपक्षी । ७ कागपक्षी । ८ गिद्धपक्षी ।

तेन दोषः प्रसिच्यते॥७१॥ ततः प्रक्षालयेत्क्वाथैः पटोलीनिम्बपत्रजैः ॥ त्रिफला खदिरो दार्वीन्यग्रोधादिर्हितः सदा ॥ ७२ ॥ एकं वा सारिवामूलं मधुना व्रणशोधनम् ॥ ७३ ॥ निशायुगं सैंधवनिंबपत्रमधूकयष्टीत्रिवृतातिलाश्च ॥ एभिः प्रपिष्टैर्घृतयुक्तलेपः सर्वव्रणे शोधनरोपणश्च ॥७४॥ सूक्ष्ममुखान्व्रणान्वर्त्या शोधयेत्संधिममर्जान् ॥ निम्बपत्रघृतक्षौद्रदार्वीमधुकसंयुता ॥ ७५ ॥ वर्तिस्तिलानां कल्को वा शोधयेद्व्रणरोपणः ॥ निर्वापणं घृतक्षौद्रैश्छिन्नदग्धव्रणोष्मणाम् ॥ ७६ ॥ एष लेपवरो ज्ञेयो शीतलीकृत्य यं विधिः ॥ रसेन बहुपुंत्र्यायाः सेकं कुर्यान्मुहुर्मुहुः ॥ ७७ ॥ तिलाः पयः सिताक्षौद्रं तैलं मधुकचन्दनम् ॥ लेपितं शोफरुग्दाहयुक्तान्निर्वापयेद्व्रणान् ॥ ७८ ॥ करंजाऽरिष्टनिर्गुंडीरसो हन्यात्क्रमीन्व्रणे ॥ सुरसादिरसैर्लेपो लेपनं लशुनेन च ॥ ७९ ॥

## धूपः ।

निंबपत्रवचाहिंगुसर्पिर्लवणसर्षपैः ॥ धूपनं कृमिरक्षोऽघ्नं व्रणकंडुरुजापहम् ॥ ८० ॥ कपोतकानां च शुनश्च शीर्षं ससैंधवं चित्रकमूलमिश्रम् ॥ तदश्वलिं-

१ वटादिगणका० २ साफकर्ताहै । ३ रहाताहै । ४ वर्ती, बात्ती । ५ जोडमेंभेद,नलछिद्र । ६ मर्म हड्डियोंकाजोड । ७ सतावरि । ८ कुत्तेकाशिर ।

गर्स्य रसेन पिष्टं व्रणप्रलेपाज्जननं हि रोम्णाम्॥८१॥ मनश्शिला च मंजिष्ठा सलाक्षा रजनीद्वयम् ॥ प्रलेपः सघृतः क्षौद्रः तद्विशुद्धिकरं परम् ॥ ८२ ॥ अयोरजः सकासीसं त्रिफला कुसुमानि च ॥प्रलेपः कुरुते काष्ण्यं सद्य एव नवत्वचि ॥ ८३ ॥ पूतिगन्धान्विवर्णांश्च महास्रावान्महारुजः ॥ व्रणान्छुद्धान्निविज्ञाय शोधनैः ससुपाचरेत् ॥ ८४ ॥ जीर्णशाल्योदनं स्निग्धमम्ल-मुस्तं द्रवोत्तरम् ॥ भुंजानो जांगलैर्मांसैः शीघ्रं व्रणमपोहति ॥८५॥ तण्डुलीयकजीवंतीसुनिषण्णकवास्तुकैः॥ बालमूलकवार्त्ताकपटोलैः कारवेल्लकैः ॥ ८६ ॥ सदाडिमैः सामलकैर्घृतभ्रष्टैः ससैन्धवैः ॥ अन्यैरेवंविधैर्वापि मुद्गादीनां रसेन वा ॥८७॥ व्रणे श्वयथुरायासात्स च रागश्च जागरात् ॥ तौ च रुक्च दिवास्वापात्ते च मृत्युश्च मैथुनात्॥८८॥सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् ॥८९॥ यष्टीमधुकमिश्रेण नाऽतिशीतेन वारिणा कषाया मधुराःशीताःक्रियाःसर्वाः प्रयोजयेत् ॥ क्रुद्धे सद्योव्रणे युंज्यादूर्ध्वं चाधश्च शोधनम् ॥९०॥ लंघनं च बलं ज्ञात्वा भोजनं चास्रमोक्षणम्॥ अतिनिःसृतरक्तस्तु कदुष्णं शोणितं पिबेत्॥९१॥रक्तक्षयोत्तत्र रुजः

१ घोडेका मूत । २ बेरेका फूल । ३ चौराईशाग । ४ कुल्फा वा पोईशाग । ५ सुसुनाशाग । ६ बथुआशाग । ७ छोटीमूली । ८ भांटा । ९ परवर । १० करेला । ११ शोथ । १२ नयेत् इ० पा० ।

करोति पवनो भृशम् ॥ स्नेहपानं परीषेकं लेपंस्वेदो-पनाहकम् ॥ ९२ ॥ कुर्वीत स्नेहवस्तिं च मारुतघ्नौष-धैर्भिषक् ॥ सद्योव्रणानां सप्ताहं पश्चात्पूर्वोक्तमा-चरेत् ॥ ९३ ॥

## व्रणसेचनम् ।

सद्योव्रणे घृतक्षौद्रसेचनं कोष्णमिष्यते ॥ आमाश-यस्थे रुधिरे वमनं पथ्यमुच्यते ॥९४॥ पक्वाशयस्थे देयं च विरेचनमसंशयम् ॥ क्वाथो वंशत्वगेरण्ड-श्वदंष्ट्राऽश्मभिदा कृतः ॥ ९५ ॥ हिंगुसैन्धवसंयुक्तं कोष्ठस्थं श्रावयेदसृक् ॥ यवकोलकुलत्थानां निर्मलेन रसेन च ॥ ॥ ९६ ॥ भुंजीतान्नं यवागूं च पिबेत्सै-न्धवसंयुताम् ॥ ९७ ॥

## अथ जात्यादिघृतम् ।

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवाम-ञ्जिष्ठाऽभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः॥सर्पिः सिद्धमनेकसूक्ष्मवदना मर्माश्रिताःस्राविणो गम्भीराः सरुजो व्रणाः सगतिकाः शुद्ध्यंति रोहंति च ॥९८॥

## अथ जात्यादितैलम् ।

जातीपटोलपिचुमन्दकरंजपत्रैस्तिक्तानिशाद्वयमधू-

१ तरारादेना । २ आमके जगहका लोहू । ३ पक्वाशय, जहां अन्न पकता है । ४ भीतर कोठेमें लोहूको । ५ दुधकवारिआ । ६ मोम ।

ककरंजबीजैः ॥ पथ्याकणाकमललोध्रकपद्मकैश्च फोताऽर्जबीजगदसिक्थकतुत्थकैश्च ॥ ९९ ॥ एभिः समैस्तु तिलतैलमिदं विपक्वं शस्तं व्रणेषु सकलेषु च कुष्ठरोगे ॥ दद्रूविसर्पविषकीटकसर्पदष्टे सद्यःक्षतेषु नखदन्तभवक्षतेषु ॥ १०० ॥ मर्दनार्थमिदं तैलं हितं शोधनरोपणम् ॥ शस्त्रप्रहारविद्धेषु दुष्टमांसे प्रशस्यते ॥ १०१ ॥

## अथ सप्तविंशति (२७) को गुग्गुलुः ।

फलत्रिकं व्योषविडंगमुस्ताऽमृतापटोलीहपुषाविशाला:॥ निशाद्वयं पौष्करचव्यवह्निक्षारो विडं सैंधवतुम्बरूणि ॥१०२॥ सौवर्चलं ग्रंथिकदेवदारुमातंगकृष्णाश्च समं विचूर्ण्य॥ तस्माच्च चूर्णाद्विगुणः पुरः स्यात् कोलप्रमाणा गुटिका विधेया॥१०३॥सा भक्षिता क्षौद्रयुता निहन्याद्दुष्टव्रणान्कासभगंगदरांश्च ॥ आनाहमुन्मादकमंत्रवृद्धिमष्टोदराण्यश्मरिं मूत्रकृच्छ्रम् ॥ १०४ ॥ सप्तविंशतिको नाम गुग्गुलुर्व्रणनाशनः ॥ अथवा त्रिफलायुक्तो गुग्गुलुर्व्रणनाशनः ॥ १०५ ॥

## अथ वह्निदग्धरोगचिकित्सा ।

व्रणः प्लुष्टादिभेदेन वह्निदग्धश्चतुर्विधः॥ प्लुष्टेवह्नि-

१ सपेदसेमि । २ ममरखी । ३ कुट । ४ मोम सपेद । ५ माहरि । ६ सींगुर । ७ गजपीपरि । ८ जरेदग्ये ।

प्रतपनं कार्यमुष्णं तदौषधम् ॥१०६॥ दुर्दग्धे तु क्रियां कुर्याच्छीतमुष्णां ततः पुनः॥घृतलेपनसेकांस्तु शीतान्येवास्य कारयेत्॥१०७॥अतिदग्धे विशीर्णानि मांसान्युधृत्य शीतलाम्॥ क्रियां कुर्याद्भिषक्पश्चात्शालितंडुलकंदलैः ॥ १०८॥ तिंदुक्यास्त्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् ॥१०९॥ सम्यग्दग्धे तु गोक्षीरीप्लक्षचन्दनगैरिकैः ॥ सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ॥ ॥ ११० ॥ अन्तर्धूमकुबेरैको दहनजं लेपान्निहंति व्रणमश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुंठनात् ॥ अभ्यंगान्विनिहंति तैलमखिलं गंडूपदैः साधितं पिष्ठा शाल्मलिमूलकं जलगता लेपात्तथा वालुका ॥१११॥ यवभस्म यवक्षारौ तैलाक्तौ संप्रलेपनात् ॥ हरतः शिखिदाहोत्थं व्रणं दाहं च तत्क्षणात् ॥ ११२॥ आर्द्रं तु सीपिकाचूर्णं मालतीतैलमिश्रितम् ॥ आलोड्य लेपितः पूर्णं वह्निदग्धं तु तां जयेत् ॥ ११३ ॥ सुंधा पुरातनी दग्धा वारिणा परिपेषिता ॥ लेपनैस्तैलदग्धस्य विस्फोटव्याधिनाशिनी ॥ ११४ ॥ स्नुह्यऽर्कक्षीरसिक्तेन गव्यं सर्पिर्निषेचयेत् ॥ शैलूषात्रिफलादार्वीक्वाथो रोचनयायुतः ॥ ११५ ॥ अक्षि-

---

१ बिधारि गयाहों। २ तेंदुआवृक्ष। ३ रहूँ, गृहधूम। ४ नन्दीवृक्ष, तुंनि। ५ एळुवा, मुसब्बंरा। ६ आगकी दाह। ७ साळवमिश्रीवडी। ८ बेळवृक्ष।

जेषु च कर्तव्यमनेनाश्चोतनं हितम् ॥ मधूच्छिष्टं सम-धुकं लोध्रं सर्जरसं तथा ॥ ११६ ॥ मंजिष्ठा चन्दनं मूर्वा पिष्ट्वा सर्पिर्विपाचयेत् ॥ सर्वेषामतिदग्धानां व्रणरोपणमुत्तमम् ॥ ११७ ॥ सिद्धं कषायकल्काभ्यां पटोल्याः कटुतैलकम् ॥ दग्धव्रणरुजास्रावदाहविस्फो-टनाशनम् ॥ ११८ ॥ कंपिल्लकं विडंगानि त्वचो दार्व्यास्तथैव च ॥ पिष्ट्वा तैलं च पक्तव्यं व्रणग्रंथि-हरं परम् ॥ ११९ ॥

## व्रणे त्याज्यानि ।

अत्यम्लं दधि शाकं च मांसमानूपवारिजम् ॥ क्षीरं गुरूणि चान्नानि व्रणितः परिवर्जयेत् ॥ १२० ॥

इति श्रीगौडवंशावतंसश्रीमदनंतभट्टात्मजशंकरविरचिते वैद्यविनोदे गंडमालाऽर्बुदश्लीपदविद्रधिशोफव्रणाऽ-गंतुकनिदानचिकित्साकथनं नामैका-दशोल्लासः ॥ ११ ॥

---

## अथ भग्नरोगनिदानचिकित्सा ।

भग्नं समासद्विविधं काण्डे सन्धौ तथैव च ॥ सर्वास्ववस्थास्वसुखं भग्नकांडेन जायते ॥ १ ॥ पी-ड्यमाने भवेच्छब्दः शूलं स्पर्शासहिष्णुता ॥ संधिभग्ने

१ टूटना ।

भवेच्चिह्नं श्वयथुर्वेदनाऽनिशम् ॥२॥ भग्नं विदित्वास्थि निषेचयेच्च जलेन शीतेन नरस्य पूर्वम् ॥ पंकेन वा लेपनमेव कार्यं निबंधनं तस्य कुशान्वितं स्यात् ॥३॥ उदुम्बराऽश्वत्थपलाशवंशकदम्बसर्जाऽर्जुनवेतसानाम् ॥ त्वग्भिः कुशैर्वा सुदृढं प्रशस्तं निबन्धनं पट्टसुपर्युदाहृतम् ॥ ४ ॥ सप्तसप्तदिनाच्छीते घर्मे मुच्येत्त्र्यहात्त्र्यहाद् ॥ सामान्ये पञ्चपञ्चाहाद्भग्नं दोषवशेन च ॥ ५ ॥ मंजिष्ठा मधुकं यष्टी लेपनं चाम्लपेषितम् ॥ शतधौतघृतैर्मिश्रशालिपिष्टप्रलेपनात् ॥ ६ ॥ अभिघातभवा रोगाः शोफा यांति शमं क्षणात् ॥ न्यग्रोधादिकषायं तु सुशीतं परिषेचयेत् ॥ ७ ॥ पंचमूलीकषायं वा क्षीरं दद्यात्सवेदने ॥ मांसं मांसरसः क्षीरं सर्पिर्यूषः सतीनजः ॥ ८ ॥ बृंहणं चान्नपानं च देयं भग्नाय जानता ॥ सघृतं गव्यदुग्धं तु मधुरौषधिसाधितम् ॥ ९ ॥ द्राक्षया शीतलं युक्तं प्रातर्भग्ने पिबेन्नरः ॥ १० ॥ रसोनमधुलाक्षाऽऽज्यसिताकल्कसमन्वितम् ॥ भवेत्संधानमचिराच्छिन्नभग्नच्युताऽस्थिषु ॥ ॥ ११ ॥ चूर्णं गुरेण संयोज्य घृतेनार्जुनलाक्षयोः ॥ भग्नं संधानमायाति लीढं क्षीरघृताशिना ॥ १२ ॥

---

१ केरावहरी ।

आभाचूर्णं मधुयुतमस्थिभंगे त्र्यहं पिबेत् ॥ आभाफलत्रिकव्योषैः सर्वैरेतैः समांशकैः ॥ तुल्यं गुग्गुलुना योज्यं भग्नं संधिप्रसादनम् ॥ १३ ॥ लवणं कटुकक्षारमुष्णमत्यल्पमैथुनम् ॥ व्यायामं नैव सेवेत भग्नो रूक्षान्नमेव च ॥ १४ ॥

## अथ नाडीव्रणनिदानचिकित्सा ।

पक्वव्रणमुपेक्षेत बहुपूयसमन्वितम् ॥ अभ्यन्तरं प्रविशति स्थानं पूयो विदार्य तत् ॥ १५ ॥ गतिस्तस्यातिगमनान्नाडीवद्वहते सदा ॥ तेन नाडी मता सा तु व्रणो नाडीव्रणः स्मृतः ॥ १६ ॥ सैन्धवज्वलनभानुमरीचं मार्कवेभरजनीद्वयमेभिः ॥ सिद्धतैलमिदमाशु निहन्याद् दूरगामपि कफानिलनाडीम् ॥ १७ ॥ क्षौद्रसैंधवयोर्वर्ती नाडीव्रणहरा स्मृता ॥ दुष्टव्रणे प्रदिहितं सेव्यमानं गतिं हरेत् ॥ ॥ १८ ॥ कर्चूरकस्य स्वरसे कटुतैलं विपाचयेत् ॥ सिन्दूरकल्कितं नाडीदुष्टव्रणविसर्पनुत् ॥ १९ ॥ कृशदुर्बलभीरूणां नाडीं मर्माश्रितामपि ॥ क्षारसूत्रेण तां छिंद्यान्न शस्त्रेण कदाचन ॥ २० ॥

---

१ नहसूरसेग नशोंका वाव । २ चटनीरोग । ३ नाडी मर्माश्रिता तु या इ० पा० । ४ काटनेवाली दवाको मोटे सूतमें लगाकर काटना ।

## अथ भगंदरनिदानचिकित्सा ।

गुदस्य द्व्यंगुले क्षेत्रे पार्श्वतः पिडिकार्तिकृत्॥भिन्नो भगंदरो ज्ञेयः स च पंचविधो मतः॥२१॥रुक्षैः कषायै रधिकोपितोऽनिलो गुदप्रदेशे पिडिकां करोति याम् ॥ उपेक्षणात्पाकमुपैति दारुणं रुजाविभिन्नाऽरुणफेनवाहिनी ॥ २२ ॥ तत्राऽगमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥ पित्तप्रदुष्टां पिटिकां गुदस्थां करोति रक्तां भृशकोपनैश्च॥२३॥ सा शीघ्रपाका हिमपूतिवाहं भगंदरं चोष्ट्रशिरोधरं तम् ॥ श्वेताव भासः कठिनोऽतिकंडूर्भगंदरः स्रावयुतः कफात्स्यात् ॥ २४ ॥ पिडिका गोस्तनाऽकारा बहुस्रावा रुजान्विता ॥ शम्बूकावर्तवन्नाडी शम्बूकावर्तको मतः ॥ २५ ॥ छत्राकृतिर्वायुगतां वर्द्धते ह्यनपेक्षणात् ॥ कृमयस्तत्र जायंते विदार्य च प्रकुर्वते ॥ २६ ॥ व्रणैर्बहुसुखैर्मार्गे तमुन्मार्गभगंदरम् ॥ सर्वे भगंदरा दुःखा घोरा साधयतां मताः ॥ २७ ॥ उपाचरेत्तां पिडिकां यथापाकं न गच्छति ॥ सुखोष्णधूमसेकाद्यैर्लेपैश्च विविधैस्तथा ॥ २८ ॥ पिडिकानामपक्कानां शुंठी छिन्ना पुनर्नवा ॥ वटपत्रेष्टिकां पिष्टा

---

१ मूछत्तेके आकार् । क्षताद्गतिः इ० पा० । २ पायुगता इ० पा० । ३ चूतड । ४ इष्टिका । पुरानी ईंट ।

लेपः शस्तो भगंदरे ॥ २९ ॥ पक्कानां पाटनं क्षारं वह्निदाहादिकं क्रमम् ॥ विधाय व्रणवत्कार्यं यथादोषं यथाबलम् ॥ ३० ॥

## अथ शोधनरोपणलेपः ।

तिलावचालोध्रकगारधूमान्यरिष्टपत्राणि निशाद्वयं च ॥ पथ्यासमं सर्वमिदं सुपिष्टं भगंदरे शोधनरोपणं स्यात् ॥ ३१ ॥ त्रिफलाया रसेनैव बिडालास्थिप्रलेपनम् ॥ भगंदरं निहंत्याशु दुष्टव्रणहरं परम् ॥ ३२ ॥ वज्रीदुग्धं भानुदुग्धं च दार्वी वर्ति कृत्वा योजयेत्तस्य गर्ते ॥ एषा वर्तिर्नाशयेद्दुष्टनाडीं पूयस्रावां शोफयुक्तां सशूलाम् ॥ ३३ ॥

## अथ व्रणशोधनम् ।

कुष्ठं तिलाः पिप्पलि सैंधवं च दन्ती त्रिवृत्तुत्थफलत्रिकाणि ॥ निशा समांशं विहितं च चूर्णं मधुप्रयुक्तं व्रणशोधनं स्यात् ॥ ३४ ॥

## गुटिका ।

त्रिफलायास्त्रयो भागाः पंचभागास्तु गुग्गुलोः ॥ पिप्पल्या एकभागः स्याद्गुटिकाः संप्रकल्पयेत् ॥ ३५ ॥ वेदनाशोफगुल्माऽर्शो भगंदरवतो हिताः ॥ ३६ ॥

१ रक्ष, घरका धुआं । २ बिल्लीकी हड्डी । ३ सेहुडका दूध । ४ मंदारका दूध ।

निशाऽर्कक्षीरसिन्धूत्थपुराश्वहनवत्सकैः ॥ सिद्धम-भ्यंजने तैलं भगंदरहरं परम् ॥ ३७ ॥ व्यायामं मैथुनं युद्धं पृष्ठभारं गुरूणि च ॥ संवत्सरं परिहरेदुप-रूढव्रणो नरः ॥ ३८ ॥

## अथोपदंशनिदानचिकित्सा।

हस्ताऽभिघातनखदन्तनिपातनाद्यैर्योनिप्रदोषबहु-मैथुनसेवनाभ्याम् ॥ शिश्ने भवंति हि गदा ह्युप-दंशसंज्ञास्ते पंचधा बहुविधैरपचारकैः स्युः ॥ ॥ ३९ ॥ सतोदभेदस्फुटनं कृष्णैः स्फोटैर्युतोऽनि-लात् ॥ रक्तस्फोटैर्युतः पित्तात्कण्डूरैः शोफसं-युतैः ॥ ४० ॥ घनस्रावयुतैः शुक्लैःस्फोटैर्युक्तो भवे-त्कफात् ॥ नानास्रावरुजायुक्तस्त्वसाध्यः स्यात्त्रि-दोषजः ॥ ४१ ॥ प्रशीर्णमांसं संजग्धं कृमिभिस्तं विवर्जयेत् ॥ उपदंशे जातमात्रे क्रियां कुर्यान्न मूढधीः ॥ ४२ ॥ दाहपाकक्रिमियुतो म्रियते शीर्णशिश्नकः ॥ उपदंशेषु सर्वेषु खिन्नस्निग्धस्य देहिनः ॥ ४३ ॥ जलौकापातनं श्रेष्ठं मेढ्रमध्ये व्यधेच्छिराम् ॥ अत्यर्थ-

---

१ कनैरकीछाल । २ कसीस । ३ पीठका बोझा । ४ उपदंश, गर्मी आतशक । ५ बिथुरा हुआ । ६ खाया हुआ मांस, सडगया हो । ७ बिथुरा हुआ । ८ मेढ्र, लिंग ।

मुत्कटे दोषे नरं सम्यग्विरेचयेत् ॥ ४४ ॥ पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ ४५ ॥ मधूकयष्टी-सरलाऽगरूणां सदारुराक्षागदपद्मकानाम् ॥ एषां प्रले-पः परिषेचनं वा वातोपदंशेषु भिषग्भिरुक्तम् ॥ ४६ ॥ मधूकोशीरमंजिष्ठागैरिकांजनपद्मकैः ॥ सचंदनोत्पलैः शीतैः पैत्तिकं संप्रलेपयेत् ॥ ४७ ॥ त्रिफलायाः कषा-येण मधुयुक्तेन सेचयेत् ॥ अथवा सघृतक्षीरगोक्षुरेक्षु-मधूदकैः ॥ ४८ ॥ आरग्वधादिक्वाथेन परिषेकः कफे हितः ॥ ४९ ॥ वटप्ररोहाऽर्जुनलोध्रपथ्याजंबूहरिद्रा-विहितः प्रलेपः ॥ सर्वोपदंशेष्ववरोहणार्थं शस्तस्तथा वा परिषेचनं च ॥ ५० ॥ सेकः सर्वोपदंशेषु भृंगराज-रसेन च ॥ मधूकपत्रचूर्णेन दाडिमत्वग्रजः कृतम् ॥ ॥ ५१ ॥ गुण्ठनं तद्वदे शस्तं लेपः पूगफलस्य वा ॥ दग्धगुंजाकृतं भस्म हरितालमनःशिले ॥ ५२ ॥ तच्चूर्णमुपदंशानामाशु शांतिकरं परम् ॥ ५३ ॥ कटाहदग्धत्रिफलामषीमाक्षिकसंयुता ॥ उपदंशे प्रले-पस्स्यात्सद्यो रोपयति व्रणम् ॥ ५४ ॥ रसां-जनं वा पथ्या वा शिरीषेण समन्वितम् ॥ सक्षौद्रं लेपनं योज्यं सर्वोऽनंगगदापहम् ॥ ५५ ॥ हय-

१ कुंद। २ सींचना धोवना। ३ लेपन गुंडन लेप। ४ कामका प्रवाह। वीर्यपात। छिंता।

मारस्य मूलेन परिपिष्टेन वारिणा ॥ असाध्याऽपि व्रजत्यस्तं लेपाल्लिंगस्य वेदना ॥ ५६ ॥ जलधौत-प्रयत्नेन लिंगोत्थमवचूर्णयेत् ॥ रोगं कासीसचूर्णेन पुरुषः सुखवाञ्छया ॥५७ ॥ करंजसालाऽर्जुननिम्ब-जंबूवटादिभूकल्ककषायसिद्धम् ॥ घृतं निहन्या-दुपदंशरोगं सदाहपाकं श्रुतिरागयुक्तम् ॥ ५८॥ उक्ता-नि यानि सर्पीषि कुष्टे नाडिव्रणे तथा ॥ उपदंशे प्रयो-ज्यानि सेकाऽभ्यंजनभोजनैः ॥ ५९ ॥ सगंधकेला-मरिचं लवंगं शुद्धं रसेन्द्रं सकलं विचूर्ण्य॥ तांबूलतोयेन घृतेन युक्तं संमर्द्य लेपं पुरुषः प्रकुर्यात् ॥६०॥ दुग्धो-दनाशी सकलोपदंशैर्विमुच्यते स्फोटरुजान्वितैश्च ॥ पर्णेन भुक्तं घृतवर्जितं तत्सर्वोपदंशान्विनिहन्ति चूर्णम्॥ ॥ ६१ ॥

## अथ लिंगार्शोरोगनिदानचिकित्सा ।

लिंगस्योपरि संघातैरंकुरैरिव संहतैः॥ क्रमेण जायते वर्त्तिस्ताम्रचूडशिखोपमा ॥ ६२ ॥ कोशस्याऽभ्य-न्तरे संधौ पिच्छिला च सवेदना ॥ लिंगवर्तिरिति

---

१ कनेरकीजड । २ भू, भूतकेशी । ३ औरासारंगाभ्रक । ४ अंडकोश, वैजा । ५ लिंगवर्त्ति, लिंगार्श ।

ख्याता लिंगार्शं इति केचन ॥ ६३ ॥ रसांजनं सर्जिका च तुत्थं शैलेयमंजनम् ॥ तालं मनश्शिला सर्वं चूर्णं मांसांकुरापहम् ॥ ६४ ॥ व्रणवच्चाचरेत्सम्यक् क्षारेणैव विघर्षयेत् ॥ लिंगवर्तिः शमं याति लेपात्कासीसचूर्णतः ॥ ६५ ॥

## अथ शूकरोगनिदानचिकित्सा।

मूढधीः शेफसो वृद्धिः प्रक्रमाद्योऽभिवांछति ॥ पिटिकास्तस्य जायंते तास्सर्वाः शूकजाः स्मृताः ॥६६॥ सर्वेषु शूलदोषेषु विपघ्नीं कारयेत्क्रियाम् ॥ जलौकाभिर्हरेद्रक्तं मेढ्रे वा व्यधयेच्छिराम् ॥ ६७ ॥ विरेचनं प्रयुंजीत गुग्गुलं त्रिफलान्विम् ॥ क्षीरेण लेपनं सेकाञ्छीनानेव च कारयेत् ॥ ६८ ॥ गृहधूमनिशायुग्मदार्वीसुरसयष्टिकैः ॥ तैलमभ्यंजनात्पक्षान्मेढ्ररोगं निवारयेत् ॥६९॥ कल्कः कषायः सर्पिश्च तैलं चूर्णं रसक्रिया॥शोधनं रोपणं चैतद्वीक्ष्यवीक्ष्य च कारयेत्॥ ॥७०॥ रसांजनं लेपमात्रात्सर्वोऽनंगगदापहम् ॥७१॥ पूगीफलार्धमादाय गोघृतेन तु घर्षयेत् ॥ रीतिभांडे द्विघटिकालेपनाद्दाहशांतिदम् ॥ ७२ ॥ शीशकं गोघृते घृष्ट्वा प्रस्थरोपरि यामकम् ॥ लेपनाद्दाहशांत्यर्थं चोपदंशे महत्क्रियाम् ॥ ७३ ॥ आढकीबीज

भस्म च सूक्ष्मचूर्णकृतं महत् ॥ तस्योद्धूलनयोगेन ह्युपदंशस्रवं हरेत् ॥ ७४ ॥

## अथ हिंगुलादिलेपः ।

हिंगुलं पारदं नागं कणा वा त्रुटि नागजम् ॥ रसकर्पूरकं शुद्धं तथा मुर्दाशृंगाख्यकम् ॥७५॥ भस्म पूगीफलं ग्राह्यं भस्म च खदिरसारजम् ॥ ससिक्थं गोघृतं सर्वं समं चायसभाजने ॥ ७६ ॥ लोहदंडेन चाग्नौ च पक्कं घृष्ट्वावतारयेत् ॥ यदा गाढत्वमायाति लेपनाद्व्याधिशांतिदम् ॥ ७७ ॥ चोपदंशेषु सर्वेषु शीर्णं मांसं प्रपूरयेत् ॥ अतिशीतलतां याति क्षतं पूरयति ध्रुवम् ॥ ७८ ॥

## अथ सुन्नताख्यरोगलेपः ।

योनिदोषान्मलाढ्यत्वं यदा मेढ्रे प्रजायते ॥ काठिन्यं मेढ्रचर्मणि बहुक्लेशकरं नृणाम् ॥ ७९ ॥ तस्मान्मेढ्रे तु शोफं वै सुन्नताख्यमितीरितम् ॥ तच्चर्म ह्यन्यमार्गेणच्छुरेण कुशलो भिषक् ॥ ८० ॥ सीपिकाचूर्णमार्द्रं तु कटुतैलेन मिश्रितम् ॥ घृष्टयेद्रीतिभांडस्थं यदा कज्जलतां नयेत् ॥ ८१ ॥ उच्छ्रितं लिंगचर्म स्या-

देतल्लेपनकृन्नरैः ॥ मुन्नताख्यं हरेद्रोगं दिनद्वादशलेपनात् ॥ ८२ ॥

इति श्रीगौडवंशावतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे भग्ननाडीव्रणभगंदरोपदंशलिंगार्शःशूकदोषमुन्नतरोगनिदानचिकित्साकथनं नाम द्वादशोल्लासः ॥ १२ ॥

---

## अथ कुष्ठरोगनिदानचिकित्सा ।

विरुद्धदुष्टाशुचिभोजनानि नवान्नपानं दधिमत्स्यमाषाः ॥ तिला गुडक्षीरदिवाऽतिनिद्रा व्यवाय[१]मम्लं गुरुघर्षणानि ॥ १ ॥ एतैश्च दुष्कर्मभिराशु दुष्टा वातादयस्त्वगुधिरं च मांसम् ॥ संदूष्य कुर्वंति गदं नराणां स कुष्ठरोगः कथितो भिषग्भिः ॥ २ ॥ उदुम्बरमृक्षकजिह्वसंज्ञं कपालकं सिध्मकपुंडरीके ॥ वैपादिकं काकणमंडले च किलासदद्रू किटिभं च चर्म ॥ ३ ॥ कंडूस्तथा चर्मदलं च पामा विचर्चिकास्फोटशतारुकाणि ॥ कुष्ठानि चाऽष्टौ दश संमतानि तेषां तु पूर्वं व्रणदाहपामाः ॥ ४ ॥

---

१ मैथुन ।

(१) उदुम्बरफलाभासः कुष्ठमौदुम्बरं स्मृतम् ॥
(२) कर्कशमृक्षजिह्वाभमृक्षजिह्वं तदुच्यते ॥ ५ ॥
(३) कृष्णाऽरुणं च परुषं कपालाभं कपालकम् ॥
(४) प्रायश्चोरसि तत्सिध्ममलाबुकुसुमोपमम् ॥ ६ ॥
(५) सश्वेतं रक्तपर्य्यन्तं पुंडरीकं च तत्समम् ॥
(६) वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥ ७ ॥
(७) काकणं नैव सिध्येच्च गुंजाऽभं तीव्रवेदनम् ॥
(८) श्वेतरक्तं स्थिरं स्निग्धमुत्सन्नमण्डलं स्मृतम् ॥८॥
(९) कण्डूमद्भिः सरागैश्च गंडैरेतत्किलासकम् ॥
(१०) सकण्डूरागपिटिका दद्रूमंडलमुद्गता ॥ ९ ॥
(११) श्यावं बहुखरस्पर्शं किटिभं नाम तत्स्मृतम् ॥
(१२) श्यावं कुष्ठं च चर्माख्यं बहलं हस्तिचर्मवत्१०॥
(१३) स्फोटैःपाण्योः स्फजो युक्ता कण्डूरुक्तामनीषिभिः
(१४) रक्तं सशूलं सस्फोटं तच्चर्मदलसंज्ञितम्॥११॥
(१५) सूक्ष्मा बह्वचःकण्डूमत्यःपामेतिपिटिकाःस्मृताः॥
(१६) सकण्डूःपिटिकाःश्यावा बहुस्रावा विचर्चिकाः१२
(१७) स्फोटाःश्यावाऽरुणाभासा विस्फोटास्ते तनुत्वचः
(१८) रक्तंश्यावं सदाहार्तिं शतारु स्याद्बहुव्रणम्१३॥
श्यावारुणं रूक्षतरं सतोदं तद्वातकुष्ठं प्रवदन्ति वैद्याः॥ पित्ताच्च दाहस्रुतिरागयुक्तं कफाद्धनं क्लेदि सकंडु कुष्ठम् ॥ १४ ॥

१ कुत्ता, चक्का, जांघका चक्का ।

## अथ संसर्गजरोगाः ।

प्रसंगाद्गात्रसंस्पर्शादेकत्रासनभोजनात् ॥ नेत्रस्पंदो ज्वरः कुष्टं संक्रामन्ति नरान्नरम् ॥ १५ ॥ वाते सर्पिर्वातिरुक्ता कफोत्थे पित्ते योज्यो रक्तमोक्षो विरेकः॥ एला रात्रिर्जंतुशत्रुः शतांह्वा कुष्टं हन्ति ताक्ष्यंशैलं बला च ॥ १६ ॥ एभिर्लेपो वह्नियुक्तैर्निहन्याद्दद्रूं यामाश्वेतकुष्टं विचर्चिम् ॥ रात्रिः पथ्या वल्गुजं रक्तबीजं वेड्गं सिन्धूः सर्षपाश्चेति लेपः ॥१७॥ नक्ताऽह्वबीजेडगजं सकुष्टं गोमूत्रपिष्टैश्च वरः प्रलेपः ॥ धात्रीस्नुहीसर्जकचक्रमर्दतुषोदकैर्दद्रुहरः प्रलेपः॥१८॥ अंजीरकत्वचो ग्राह्यं बाकुचीबीजतत्समम् ॥ गोदुग्धेन शिलापिष्टाल्लेपनाच्छ्वेतकुष्टहृत् ॥ १९ ॥ आरग्वधस्य पत्राणि पिष्ठा तक्रेण मर्दयेत् ॥ पर्णानि काकमाच्या वा हयमारस्य वा च्छदैः ॥ २० ॥ तक्रपिष्टः प्रलेपश्च कण्डूदद्रुहरः परः ॥ २१ ॥ कुष्टैडगजसिन्धूत्थं कृमिजित्सर्षपैः कृतः ॥ सौवीरपिष्टो लेपोऽयं दद्रूमंडलसिध्मजित् ॥ २२ ॥ कासमर्दकमूलानि सौवीरेण प्रपेषयेत् ॥ लेपेन दद्रुकुष्ठानि जयेदेतन्न संश-

---

१ सौंफ । २ चित्त । ३ चकौड । ४ राळ धुना, करायल । ५ कपूर । ६ वायबिडंग । ७ कांजी । ८ दाद्रु दीनाई । ९ मंडलकोढ चकत्ते । १० सिद्मआरोग । ११ कसौंदी ।

यः ॥२३॥ दुर्वैण्डगजसिन्धूत्थं पथ्यावल्गुकुठेरकाः ॥
तक्रकांजिकसंपिष्टा त्रिलेपाद्दद्रुनाशनः ॥ २४ ॥
कदलीक्षाररजनीलेपो सिध्मानि नाशयेत् ॥ गंधकः
सयवक्षारः कटुतैलेन सिध्महा ॥ २५ ॥ स्नानभोजन-
पानेषु प्रलेपोद्वर्तनेषु च ॥ शीतलं खादिरं वारि सर्वत्व-
ग्दोषनाशनम् ॥ २६ ॥ गैरिकं टंकणं चैव नौसादरकैः
समम् ॥ लिप्ता शीतलतोयेन दद्रुसर्षपिका जयेत्॥२७॥
फलत्रिकच्छिन्नरुहापटोलीसनिम्बवासाखदिरैः कषा-
यः ॥ पीतः प्रभाते विनिहंति कंडूविसर्पपामाकिटि-
भानि कुष्ठम् ॥ २८ ॥ सोमराजीबीजकर्षं पिबे-
दुष्णेन वारिणा ॥ भोजनं क्षीरसर्पिर्भ्यां सर्वकुष्ठैः
प्रमुच्यते ॥ २९ ॥ छिन्नायाः स्वरसो वापि सेव्य-
मानस्तु कुष्ठहा ॥ राजिकागुडसिन्धूत्थं पिष्ट्वा सम्य-
क्प्रलेपितम् ॥ ३० ॥ बिडालचर्मणा बद्धं नाशं चर्म
दलं व्रजेत् ॥ ३१ ॥ मधुसिक्थकसिन्धूत्थं गुडगुग्गुल-
गैरिकम् ॥ घृतं करेणुदुग्धं च रालं पिष्ट्वा प्रलेपयेत् ॥
॥ ३२ ॥ पादयोःस्फुटनं नाशं प्रयाति चिरकाजलम् ॥
पिष्टं जातीफलं लेपाद्विनिहंति विपादिकाम् ॥ ३३ ॥
तद्वत्सर्जरसस्तैलमधुयुक्तः प्रलेपनात् ॥ पलद्वयं तु

---

१ वनतुलसी। २ नैनुआगंधक। ३ मोम । ४ हाथीका दूध।
५ पादहर्ष पादरफुटन रोग, पैरफुटन । ६ व्यवाय ।

गोमूत्रं हरिद्राकल्कसंयुतम् ॥ ३४ ॥ पिबेन्नरः काकमाची कंडूं पामां विनाशयेत् ॥ गंधकः कटुतैलेन कण्डुपामाविनाशनः ॥ ३५ ॥ सिंदूरगुग्गुलरसांजनसिक्थतुत्थतुल्यांशकैः कटुकतैलमिदं विपक्वम् ॥ कंडूस्रवत्पिटिकिकामथवाऽपि शुष्कामभ्यंजने सकृदुद्धरति प्रसह्य ॥ ३६ ॥ सिंधुगोमयसंयुक्तां हरिद्रां माक्षिकेण च ॥ पिष्ट्वा प्रलेपनं योज्यं पामाकंडूविनाशनम् ॥३७॥ जीरकस्य पलं पिष्ट्वा सिंदूराऽर्द्धपलं तथा ॥ कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम् ॥ ३८ ॥

## अथ बृहन्मरिचादितैलम् ।

मरिचपिप्पलिचन्दनकुष्ठकं रविपयः सुरदारुकगोमयम् ॥ द्विरजनीहरितालमनश्शिलानलदकर्णिकवारुणिकां विषम् ॥ ३९ ॥ पृथगिदं समम‌र्द्धपलं पचेत्कटुकतैलचतुर्गुणगोजलम् ॥ कटुकतैलमिदं परिसाधितं हरति कुष्ठगदं च विचर्चिकाम् ॥ ४० ॥ किटिभं कंडुपामाश्च विस्फोटं मंडलानि च ॥ रक्तोद्भवास्तु ये रोगा ये च शाखाश्रयाः स्थिताः ॥ ४१ ॥ ते सर्वे विलयं यांति तैलस्याऽस्य प्रभावतः ॥ कल्काच्चतुर्गुणस्नेहः स्नेहात्क्वाथश्चतुर्गुणः ॥ ४२ ॥ रजनी-

---

मोम । २ मंदारका दूध । ३ कनेर । ४ वरानावृक्ष । ५ सिंगियामाहुर । ६ हांथपांव ।

कल्कसंयुक्तामकंपत्ररसे पचेत् ॥ कटुतैलं हरेत्तच्च पामाकंडूविचर्चिकाः ॥ ४३ ॥ वासापटोलीत्रिफला-गुडूचीनिदिग्धिकानिंबकरंजतोयैः ॥ वासादिकल्केन तु सिद्धमेतद्घृतं महावज्रकमाविशंति ॥ ४४ ॥ निषेवितं तद्विनिहंति कुष्ठं विशीर्णकर्णांगुलिनासिकं च ॥ ४५ ॥ हरितालस्यैकभागः सोमराजी चतुर्गुणा ॥ संपेष्य च गवां मूत्रे लेपः श्वित्रं विनाशयेत् ॥ ४६ ॥ सबीज-सारः खदिरस्य सारः सलोहचूर्णः सविडंगसारः ॥ सनिंबसारत्रिफलाऽमृताह्वकुष्ठापहः श्वित्रगदापहश्च ॥ ॥ ४७ ॥ दूर्वानिशायुग्मलेपः कंडूपामाविनाशनः ॥ दूर्वादिलेपो विख्यातः सर्ववैद्येषु पूजितः ॥४८॥ स्वर्ण-क्षीरीं चक्रमर्दं विडंगं सिन्दूरं स्यात्पारदं गंधकं च ॥ कुष्ठं सर्वं मर्दयेद्धूर्तनिंबतांबूलानां पत्रजन्यै रसैश्च ॥४९॥ अस्मात्लेपान्नाशमायांति शीघ्रं पामाः कंडूचर्चिकाः कंडुयुक्ताः॥५०॥महिषीनवनीतेन सिंदूरं मरिचं तथा ॥ संपिष्टं बहुधा लेपात्पामां नाशयति ध्रुवम् ॥ ५१ ॥ गंधको निंबुतोयेन लेपात्सिध्मविनाशनः ॥ जंबीरस्य रसो वापि नवसारयुतस्तथा ॥ ५२ ॥

## अथ गलितकुष्ठलक्षणम् ।

नासिकाग्निमविभागविभंगो हस्तपादवथुः श्वय

१ छोटीकटेरी । २ मकुची । ३ सपेदकोढ । ४ वायविडंग । ५ संडमांड । ६ धतूरा । ७ कैसुआगंधक, वोअवरासार ।

थुश्च ॥ अंगुलीविगलनं स्वरहानिस्तद्वदं निगदितं किल कुष्ठम् ॥९३॥ भवंति वातरक्तेन सर्वे कुष्ठगदा नृणाम् ॥ तस्मात्सर्वेषु कुष्ठेषु रक्तस्रावो विधीयते ॥ ९४ ॥

## सूताद्यमोदकः ।

सूताऽभ्रगंधाऽयसशुल्बधारा करंजबीजानि शिलाजतुश्च॥ फलत्रिकं गुग्गुलुचित्रके च सतिन्दुके सर्वमिदं समांशम् ॥९५॥ क्षौद्रेण साज्येन विमर्द्य भांडे स्निग्धे निधायाथ दिनानि सप्त ॥ कोलप्रमाणं परिभक्षणीयं प्रातर्गलत्कुष्ठविनाशनाय ॥९६॥ पथ्ये पयः शर्करया समेतं भक्तं पयः साधितमेव कुर्यात् ॥ वृन्ताकमाषाद्यहितं च वर्ज्यं स्त्रीसेवनं कुष्ठविकारिणां च ॥ ९७ ॥

## अथ माणिक्यतिलकरसः ।

रसगंधकताप्यायःकांततीक्ष्णाभ्रभस्मकम् ॥ हिंगुलं मधुकं कुष्ठं सर्वं समविभागकम् ॥ ९८ ॥ शतमूलीनिजद्रावैर्मंजिष्ठादिकषायतः ॥ त्रिदिनं त्रिदिनं सम्यक्परिमर्द्य विशोष्य च ॥ ९९ ॥ ततस्तु पक्वमूषायां निरुध्यातिप्रयत्नतः ॥ प्रक्षिपेद्वालुकायंत्रे प्रपुटेद्दिवसत्रयम् ॥ १०० ॥ माणिक्यतिलको नाम रसो नासत्य-

१ ताम्र । २ मैनी । ३ तेंदू ।

कीर्तितः॥ एष कुष्ठं हरत्याशु सन्मित्रमिव हृद्व्यथाम् ॥ ॥ ६१ ॥ कस्तुंबरीरक्तकलायमूलं सूतो बलीरामठसोमराज्यौ ॥ निम्बस्तिला वह्निभुजंगकाख्यौ सर्वं समं गोलकमिष्टमेतत् ॥ ६२ ॥ छायाविशुष्कं मधुनाऽक्षमात्रं दुग्धेन पीतं सितकुष्ठहारी ॥ क्षिप्रापि कुष्ठस्य सदैव पथ्या सक्षारमम्लं परिवर्जनीयम् ॥ ६३ ॥ अरण्योपलभूत्यांगमर्दनं बंधिरं जयेत् ॥ गुह्यपाणितलोष्ठेषु जातमप्यचिरंतनम् ॥ ६४ ॥ वर्जनीयं विशेषेण किलासं सिद्धमिच्छता ॥ योषिन्मांससुरावर्जी कुष्ठी कुष्ठमपोहति ॥ ६५ ॥

## अथोदर्दशीतपित्तनिदानचिकित्सा ।

शीताऽनिलस्पर्शगुणेन दुष्टौ कफाऽनिलौ पित्तमवाप्य देहे ॥ विसर्पतोंतर्बहिराशुपूर्वं शोफं सकण्डुं कुरुतः सदाहम् ॥६६॥ वरटीदंष्ट्रसंस्थानःशोफः स्याज्ज्वरवांतिमान् ॥ उदर्दः स तु विज्ञेयः शीतपित्तमथाऽपरे ॥ ॥ ६७ ॥ असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ॥ मंडलानि सकण्डूनि यत्र स्युः कोठसंज्ञितः ॥ ६८ ॥ वाताऽधिकं शीतपित्तमुदर्दश्च कफाऽधिकः ॥ कंडूमण्डलरागैश्च युक्तोसौ कोठसंज्ञितः ॥ ६९ ॥ अत्राशुकार्यं

---

१ निर्विषी । २ रक्तगुंजा । ३ अफीम । ४ बिनुआकंडा । ५ कंडेकाभस्म । ६ शून्यबहरी । ७ चूतड ।

वमनं पटोलीवासासुभद्रैस्त्रिवृता विरेकः ॥ अभ्यंग इष्टः कटुतैलकेन सेकस्तथा चोष्णजलेन शस्तः ॥ ७० ॥ क्षौद्रेण युक्तां त्रिफलां विलिह्यात्सिता मधूकं गुडसाऽर्द्रकं वा॥कटुत्रिकं क्षारयुतां यवानीं खादेत्तथा चाऽमलकं गुडेन ॥ ७१ ॥ कुलत्थं स्वरसेनैव रसैस्तित्तिरलावजैः ॥ भोजनं च सदा पथ्यं शीतोष्णं दोषकालतः ॥ ७२ ॥ निम्बस्य पत्राणि घृतेन धात्री मिश्राणि युंज्यात्तदुदर्दकोठे ॥ सिद्धार्थदद्रुघ्ननिशातिलानामुद्वर्तनं स्यात्कटुतैलमिश्रम् ॥ ७३ ॥ भिषक्संशुद्धदेहस्य कुष्ठघ्नीं कारयेत्क्रियाम् ॥ कोठोदर्दे शीतपित्ते ह्यम्लपित्ते क्रियां तथा ॥ ७४ ॥

## अथाऽम्लपित्तरोगचिकित्सा ।

विदाहि कट्वम्लविरुद्धपित्तप्रकोपिपानान्नरतस्य जंतोः ॥ पित्तं विदग्धं भृंशसंचितं प्राक्तदम्लपित्तं मुनिभिः प्रदिष्टम् ॥ ७५ ॥ तिक्ताऽम्लोद्गारहृत्कंठदाहापक्त्यरुचिक्लमैः ॥ उत्क्लेशगौरवैरेतैर्ह्यम्लपित्तं विदुर्बुधाः ॥ ७६ ॥ तृष्णामूर्छावह्निसादभ्रममोहकरं हि तत् ॥ तिक्ताऽम्लवमनं कुर्यादभुक्तो भुक्त एव वा ॥ ७७ ॥ हस्तपादे च दाहोष्णं महतीमरुचिं ज्वरम् ॥

---

१ नागरमोथा । २ अमिलशुकीरोग । ३ ग्लानि । ४ जी मचलाना । ५ अमिलचुक्की । मुख खट्टाहोजाताहै ।

मंडलं पिटिकाकंडूकोठान्संजनयेच्च तत् ॥ ७८ ॥ सानिलं सानिलकफं सकफं तच्च लक्षयेत् ॥ वाते कंपो वमिः शूलं कफे ष्ठीवनगौरवम् ॥ ७९ ॥ उभयोर्जायते चिह्नं कफमारुतसंभवे ॥ रोगोयमम्लपित्ताख्यो बलात्साध्यो नवोत्थितः ॥ ८० ॥ मधुधात्रीफलरसैः सम्यग्वान्तं विरेचयेत् ॥ त्रिवृता क्षौद्रयुतया सुस्निग्धं चानुवासयेत् ॥ ८१ ॥ आहारं तिक्तभूयिष्ठं पानं चापि प्रयोजयेत् ॥ यवगोधूमविकृतीलाजसक्तून्सितायुतान् ॥ ८२ ॥ अन्ने विदग्धे कर्तव्यं वमनं कोष्णवारिणा ॥ ऊर्ध्वगं वमनैर्विद्वानधोगं रेचनैर्हरेत् ॥ ८३ ॥ सम्यक्संशुद्धदेहस्य यदि दोषो न शाम्यति ॥ कृतशीतविधिस्तत्र कुर्याद्रक्तविमोक्षणम् ॥ ८४ ॥ द्राक्षाऽभयापिप्पलिधन्वयासिताश्च संचूर्ण्य समं विलिह्यात् ॥ क्षौद्रेण साकं कफकंठदाहतृष्णाऽम्लपित्तज्वरवान्मनुष्यः ॥ ८५ ॥ छिन्नोद्भवानिम्बपटोलपत्रं क्वाथं पिबेत्क्षौद्रयुतं तथैव ॥ निहंति पित्तास्रमनेकरूपं सुदारुणं दाहयुताऽम्लपित्तम् ॥ ८६ ॥ पटोलयवकृष्णानां क्वाथं मधुयुतं पिबेत् ॥ नाशयेदम्लपित्तं च छर्दितृष्णाऽरुचिज्वरान् ॥ ८७ ॥ पटोलतिक्तात्रिफलाकषायः सितायुतो हंति सदाऽम्लपित्तम् ॥ छिन्नोद्भवा निंबपटोल-

---

१ धुआंइनडेकारमें ।

पत्रक्काथं पिबेत्क्षौद्रयुतं तथैव ॥ ८८ ॥ ज्वलंतमिव चात्मानं मन्यते योऽम्लपित्तवान् ॥ तस्य संशोधनं पथ्यं न शान्तिः शोधनं विना ॥ ८९ ॥ फलत्रिकं त्रिकटुकं विडंगं चित्रको घनः ॥ प्रत्येकं तु पलं चैषां पलाऽर्द्धं गंधकस्य च ॥ ९० ॥ कर्षमेकं रसेन्द्रस्य सूक्ष्मं च यदि पेषितम् ॥ बिडालपदमात्रं तल्लिह्याच मधुसर्पिषा ॥ ९१ ॥ शीतोदकं पिबेच्चानु क्रमाद्रव्यं पयस्तथा ॥ वह्निमांद्यमम्लपित्तं शूलं च परिणामजम् ॥ ९२ ॥ कामलां पांडुरोगं च हन्यादेतद्रसायनम् ॥ ९३ ॥

## अथ नारिकेलखंडः ।

नारिकेरकुडवं सुपेषितं तत्समाक्षिकसिताचतुर्गुणम् ॥ नालिकेरकजले विलोडितं सर्वमेव मृदुवह्निना पचेत् ॥ ९४ ॥ मुस्तधान्यककणात्रिसुगंधं चूर्णितं पृथगिदं समशाणम् ॥ निःक्षिपेत्तदनु शीतलभूते नालिकेरजनितः खलु खंडः ॥९५॥ श्वासकासपरिणामजशूलमम्लपित्तमतिदारुणं जयेत् ॥ पुँस्त्वशुक्रबलवर्द्धनः परं रक्तपित्तगलदाहनाशनः ॥ ९६ ॥

## अथ नारिकेलपाकः ।

भर्जनं नालिकेरस्य कुर्यादघृतपलेन च ॥ यदा मधु-

१ कल्याण ।

निभां दृष्ट्वा मन्दीभूतेऽग्नितां नयेत् ॥ ९७ ॥ जीरकं धान्यकं पिष्ट्वा घृतप्रस्थं विपाचयेत् ॥ पलाऽर्द्धं नाशयेच्छीघ्रमम्लपित्तं सुदारुणम् ॥ ९८ ॥

## अथ विसर्परोगनिदानचिकित्सा।

कट्वम्लतीक्ष्णोष्णनिषेवणेन दोषाः प्रदुष्टा रुधिरं च मांसम् ॥ त्वचोऽलसीकाः प्रविदुष्य धातूंन्विसर्परोगं जनयंति घोरम् ॥ ९९ ॥ विसर्पः स तु विज्ञेयः सर्वतः परिसर्पणात्॥ पृथग्द्वंद्वसमस्तैश्च दोषैः सप्तविधो मतः ॥ १०० ॥ वातज्वरसमो वातात्पित्ताच्छोफस्तु शीघ्रगः ॥ कफात्कंडूयुतः स्निग्धस्त्रिदोषात्सर्वरूपधृक् ॥ ॥ १०१ ॥ आग्नेयो वातपित्ताभ्यां ग्रन्थाख्यः कफवातजः ॥ यस्तु कर्दमको घोरः स पित्तकफसंभवः ॥ ॥ १०२ ॥ यंयं देशं विसर्पश्च विसर्पति भवेत्स सः ॥ अग्निदग्ध इव स्फोटैश्चीयते दाहरोगवान् ॥ १०३ ॥ अंगं चित्तमिवांगारैर्यत्र सोऽग्निविसर्पकः॥ कुरुते ग्रंथिमालां यः स स्याद्ग्रन्थिविसर्पकः ॥ १०४॥ पंकवच्छीर्णमांसो यः कर्दमाख्यमुशंति तम् ॥ विसर्पेषु च सर्वेषु लंघनं रक्तमोक्षणम् ॥ १०५ ॥ विरेकवमनालेपसेचनानि प्रयोजयेत् ॥ वांतिर्निंबपटोलाभ्यां पिप्पली-

१ चटनीरोग फैलनेवाली । सर्वत्र फैलनेसे बिसर्परोग नाम पडा है ।

मदनेन वा ॥ १०६ ॥ विरेचनं त्रिफलया शस्तं तिवृतया सह ॥ एषः श्रेष्ठतरो चूर्णं वीक्ष्य मात्राऽर्द्धकर्षकम् ॥ १०७ ॥ रास्नोत्पले दारुकचंदने च वृत्ता मधूकं घृतयुक्तमस्य ॥ लेपो विसर्पे पवनोद्भवे वा शक्रत्पयो[1] मूत्रसुखोष्णलेपः ॥ १०८ ॥ मंजिष्ठापद्मकोशीरन्यग्रोधप्लक्षचन्दनैः ॥ यष्टीनीलोत्पलैःपित्ते क्षीरपिष्टैःप्रलेपनम् ॥ १०९ ॥

## अथ दशांगलेपः।

शिरीषमांसीजलकुष्ठयष्टीनिशाद्वयैलानतचंदनानि॥ लेपो दशांगः सघृतो निहंति विसर्पशोफज्वरकुष्ठदाहान् ॥ ११० ॥ समंगा त्रिफला सेव्यमुशीरं कारवीरकम् ॥ नलमूलमनंता च लेपः श्लेष्मविसर्पहा ॥ १११ ॥[2] अमृतवृषपटोलीनिंबकल्कैरुपेतं त्रिफलखदिरसारं व्याधिघातश्च तुल्यम् ॥ कथितमिदमशेषं गुग्गुलोः पादयुक्तं हरति विषविसर्पं कुष्ठमष्टादशाहात्॥ ॥ ११२ ॥ भूनिम्बवासाकटुकापटोलीफलत्रिकाऽरिष्टकचंदनानाम् ॥ विसर्पदाहज्वरशोथकंडूविस्फोटतृष्णावमिनुत्कषायः ॥ ११३ ॥ त्रिदोषजां क्रियां कुर्याद्विसर्पे त्रिकसंभवे ॥ वातपित्तप्रशमनमग्निसंज्ञे विसर्पके ॥ ११४॥ कफपित्तप्रशमनं प्रायः कर्दमसंज्ञके ॥ कफ-

१ वर्गेद । २ फाकारि ।

वातहरं कर्म ग्रंथिसंज्ञे विसर्पके ॥ ११५ ॥ एरंडतुंबिनी निंबा वाकुची चक्रमर्दकम् ॥ तिक्तकोशातकीबीज-मंकोल्लं चंचुबीजकम् ॥ ११६ ॥ गोमूत्रदधिदुग्धैस्तु भावयेत्तिलजेन च ॥ सूत्रेणाजाप्रसूतेन तैलं पाताल-यंत्रजम् ॥ ११७ ॥ विसर्पं नाशयत्याशु श्वेतकुष्ठं च तत्क्षणात् ॥ ११८ ॥

## अथ विस्फोटकरोग ( शीतला ) चिकित्सा।

कट्वम्लोष्णादिभिर्दोषाः कुपिता मांसशोणितम् ॥ संदूष्य कुरुते घोरान्विस्फोटाञ्ज्वरसंयुतान् ॥११९॥ अग्निदग्धनिभाः स्फोटा गात्रे सर्वत्र वा क्वचित् ॥ जायन्ते विविधाऽकारा विस्फोटक इति स्मृतः॥१२०॥ विसर्पवत्क्रिया कार्या शस्तं वमनरेचनम्॥ क्षुद्राऽढकी-मसूराणां यवशालियुजां रसैः ॥ १२१ ॥ सुनिषे-ण्णककर्कोटकारवेल्लकपर्पटैः ॥ तिक्तद्रव्यसमायुक्तं भोजनं संप्रयोजयेत् ॥ १२२ ॥ अमृतखदिरमु-स्तं सप्तपर्णं पटोलं वृषकमसितवेत्रं द्वेहरिद्रे कषा-यः ॥ विविधबहुविसर्पान्कुष्ठविस्फोटकंडूरपनयति मसूरीं शीतपित्तज्वरांश्च ॥ १२३ ॥ पटोलनिंब-त्रिफलागुडूची मूर्वा हरिद्राकटुरोहिणीभिः ॥ दुरालभा

१ अकोल्ह । २ चेंचूबीज । ३ विस्फोटक चेचक शीतला। ४ सुसुना-शाग । ५ छितिउनका वृक्ष । ६ यवासा ।

चन्दनयासमुस्तानिंबैः कषायो विनिहंति शीघ्रम् ॥ ॥ १२४ ॥ त्वग्दोषविस्फोटविसर्पकंडूदाहज्वरच्छर्दिगदानशेषान् ॥ उशीरलोध्रं त्पलचन्दनानां स सारिवानां च निहंति लेपः ॥ १२५ ॥

## अथ कमलादिघृतम् ।

कमलमधुकलोध्रं नागपुष्पं विडंगं द्विनिशनतगदैलापद्मकं तुत्थरालम् ॥ सकलमथ जलेन प्रस्थमाज्यं विलोड्य विपचितमिदमग्नौ हंति विस्फोटसर्पान् ॥ १२६ ॥

## अथ कंपिल्लादितैलम् ।

कम्पिल्लवेल्लपिचुमंदघनं प्रियंगुलोध्रं फलत्रिकबलाकुटजानि रालः ॥ एलाऽगरुखदिरधातुकिचन्दनानि पिष्टा पचेच्च तिलतैलमिदं सुपक्वम् ॥ १२७ ॥ विस्फोटकुष्ठगलगंडविसर्पनाडीसर्पाऽखुकीटविषदंशगदान्निहंति ॥ १२८ ॥

## अथ सूर्यसंक्रांतिविस्फोटः ।

सूर्य्यसंक्रांतियोगाद्यदरिष्टत्वं च भूमिगः ॥ देशे-देशे मनुष्याणां विस्फोटत्वगदं नरैः ॥ १२९ ॥ पशवो

१ उबांत । २ नागकेसरी ।

वा शृगालो वा वृक्षो वा पक्षिभिस्तदा ॥ विस्फोटं कुरुते सूर्यो वायुः कुप्यति देहिनः ॥१३०॥ संक्रांति-दानयोगेन शीतलामंत्रपाठतः ॥ दुग्धोदनं समिष्टानि खादेत्पथ्यं सुखी नरः ॥ १३१ ॥ मधुशीतलतोयेन वस्त्रपूतं तु भक्षितम् ॥ विस्फोटके च दातव्योऽथवा कुंडलिनीजलैः ॥ १३२ ॥

## अथ स्नायुरोगचिकित्सा (नहरुआ)।

दोषप्रकोपमुपगम्य करोति शोफं शाखासु तत्क्षत-भवं पिशितं विशोष्य ॥ कुर्याच्च तंतुसदृशं प्रविभिद्य शोफं सस्नायुको बहिरुपैति शनैः शनैर्यत् ॥ १३३ ॥ अपक्वादुःखबाहुल्यं छेदात्पक्वं समाहरेत् ॥ तत्पाता-च्छोफशांतिः स्यात्पुनः स्थानांतरे भवेत् ॥ १३४ ॥ बालः स एव विज्ञेयः क्रिया कार्या विसर्पवत् ॥ स्नेह-स्वेदप्रलेपादि कर्म कुर्याद्यथायथम् ॥ १३५ ॥ बब्बूलं-बीजं परिहंति लेपाद्धेकस्तथा कांजिकसाधितश्च॥गव्यं घृतं स्नायुकमाशु पीतं निर्गुंडिकायाः स्वरसत्र्यहाद्वा ॥ ॥ १३६ ॥ मुस्ताविषापिप्पलिविश्वभार्ङ्गीविभीतकानां विहितं सुचूर्णम्॥ कदुष्णतोयेन निपीतमाशु प्रणाशये-त्स्नायुकरोगमुग्रम् ॥ १३७ ॥ धत्तूरपत्रस्य विबन्धनेन

---

१ हाथ-पैर० शाखाहैं। २ स्नायुक, तंतुरोग। ३ बबुरका फल।

व्रणाद्बहिः स्नायुक एति शीघ्रम् ॥ ऽमृताश्वदंष्ट्रा-सलिलेन पिष्टा हरेद्विलेपाद्बहुबालकार्तिम् ॥ १३८ ॥ धत्तूरपत्रं घृतलिप्तमीषदुष्णं विधायोपरि बंधनीयम् ॥ बलादलानां विहिता सुपिंडी बालं निहन्यात्परिबंधिता वा ॥ १३९ ॥

## अथ शीतलाभेदचिकित्सा ।

ओषेश्चतुर्द्धा कथितो नराणां व्याधिस्वभावोयम-हेतुजश्च ॥ तक्रौरिकाऽकस्मिकशीतलानां भेदादमीषां ज्वरमेव पूर्वम्॥१४०॥ कासः प्रलापोऽरुचिदाहतृष्णा-भ्रमांगसादा रतयो भवंति ॥ १४१ ॥ तक्रवर्णास्तु तक्राख्या रुजोत्पत्तिलयान्विताः ॥ प्रवालचूर्णवर्णा-भास्तीव्रज्वरपुरस्सराः॥१४२॥ औरिका चेति विख्या-ता नवमेऽहनि शाम्यति ॥ स्फोटा वपुषि दृश्यन्ते दाहज्वररुजान्विताः ॥ १४३ ॥ आकस्मिकोत्पत्तिल-यास्तेनैवाऽकस्मिका मताः ॥ १४४ ॥ पक्वपीलु स-दृशा ज्वरवंतः स्फोटकाश्चिमचिमान्वितगात्राः ॥ यत्र

---

१ दाहशीतला । २ स्नायुभेद ।

३ श्लोकः—रेक्तमज्जावसामांसान्यस्थिमेदासिपार्वति ॥१॥ इति दुर्गाकीलके॥

टी०—लोहू १, मज्जा २, चर्वी ३, मांस ४, हड्डी ५, मेदा इनोंको फोडकर-रोग ( चेंचक ) का पैदा होताहै ॥ १ ॥

४ अरहरदाल ।

कंडुवमयो बहुधा स्युः शीतला च कथिता मुनिभिः सा ॥१४५॥ मसूरिकाक्रियां कुर्यात्सर्वेष्वोषगदेषु च ॥ अस्मिन्दाहहरी सर्वा क्रिया कार्या भिषग्वरैः ॥१४६॥ कथितं तुंबरिजलं पिबेच्चणका वा विधिभर्ज्जिता हिताः ॥ तदौषधगदो बहिभर्वेद्विलयं यांति मदज्वरादयः॥१४७।प्रतिक्रियात्र कर्तव्या यत्नात्पूज्यो घटोत्कचः॥ रजस्वलानां स्त्रीणां तु संसर्गं परिवर्जयेत् ॥१४८॥ गोमयस्य रजो मूर्ध्नि विकिरेत्सप्तमेऽहनि ॥ निशातंडुलचूर्णस्य लेपः कुर्यात्ततः परम् ॥१४९॥ पादे कपर्दिकाबंधः पूजयित्वा घटोत्कचम्॥ अनेन विधिना रोगी मांगल्यं स्वास्थ्यमश्नुते॥१५०॥ ओषे शांते दाहतापज्वराणां शांतिर्न स्याच्चेत्तदा भेषजानि ॥ योज्यान्याशु श्लेष्मपित्ते हितानि छिन्ना धान्यं पद्मकं वारि निंबः ॥ ॥१५१। पटोलमुस्तावृषधन्वयासभूनिंबतिक्ताऽमृतपर्पटैश्च॥निंबेन युक्तैर्विहितः कषायो जयेदपक्कां च मसूरिकां तु ॥१५२॥ कफात्तक्रः परिज्ञेयः ओरिकां पित्तरक्तजा ॥ आकस्मिको भवेद्वाताच्छीतला सर्वदोषजा ॥ १५३ ॥ ओषी मसूरिका प्रोक्ता स्तस्माद्यत्नेन साधयेत् ॥ पिबेन्मसूरिकाऽरंभे नैम्बं वा केवलं रसम् ॥१५४॥ विस-

---

१ कौडीडोरेमें गुथिबांधना । २ दाहशीतला, फोडा । ३ ओरिकानामशीतला, फोडा। ४ ओषी, मसूरिका, वोदरी, शीतला, चेंचक, ये नाम हैं ।

र्येति सविस्फोटा क्लिन्ना स्राववती तथा ॥ दशांगलेप-चूर्णेन चूर्णिता शांतिमेति च ॥ १५५ ॥ कुर्याद्व्रणवि-धानं च तैलादीन्वर्जयेच्चिरम् ॥ जपहोमोपहारैश्च दान-स्वस्त्ययनादिभिः ॥ १५६ ॥ घटोत्कचं द्विजान्गाश्च शिवं गौरीं च पूजयेत् ॥ व्रणशोथहरैर्योगैर्वातरोगहरै-र्जयेत् ॥ १५७॥ दुष्टव्रणेषु तेष्वेव जलौकाभिर्हरेदसृक् ॥ यदा पूययुतं स्रावं तदा निम्बस्य तैलकम् ॥ १५८ ॥

इति श्रीगौडवंशावतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे कुष्ठोदर्दशीतपित्तकोठाऽम्लपित्तविसर्पविस्फोट-स्नायुकमसूरिका ( चेंचक ) निदानचिकित्सा-कथनं नाम त्रयोदशोल्लासः ॥ १३ ॥

---

## अथाऽजगल्लिकानिदानचिकित्सा ।

ग्रंथितानि रुजाः स्निग्धाः पिटिका मुद्गसन्निभाः ॥ वातश्लेष्मोद्भवा ज्ञेया बालानामजगल्लिका ॥ १ ॥ जलौकाभिर्हरेद्रक्तं पक्वं व्रणवदाचरेत् ॥ सौराष्ट्री-शुक्तिकाक्षारकल्कैर्लिंपेन्मुहुर्मुहुः ॥ २ ॥ बाहुपा-र्श्वांसकक्षासु कृष्णस्फोटा सवेदना ॥ पित्तकोपेन संभूता सा कक्षेत्यभिधीयते ॥ ३ ॥ कर्णस्याभ्य-

---

१ कखाघडा, इसपर शिवपार्वती, शीतलादेवीकी पूजा करना।

न्तरे जातां पिटिकामुग्रवेदनाम् ॥ स्थिरां पनसिकां तां तु विद्यादंतःप्रपाकिनीम् ॥ ४ ॥ मनश्शिला-देवदारुकुष्ठकल्कैः प्रलेपयेत् ॥ परिपाकगतां भित्त्व व्रणवत्समुपाचरेत् ॥ ५ ॥ विदारीकन्दवद्वृत्ता कक्षा-वंक्षणसंधिषु ॥ विदारिका भवेद्रक्ता सर्वजा सर्वल-क्षणा ॥ ६ ॥ रक्तप्रसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥ जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥ ७ ॥ पक्वां विदार्य शस्त्रेण पटोलपिचुमंदयोः ॥ कल्केन तिलयुक्तेन सर्पिर्मिश्रेण योजयेत् ॥ ८ ॥ अवेदनं स्थिरं चैव यस्मिगात्रे प्रदृश्यते ॥ माषवत्कृष्ण-मुत्सन्नं मलिनं माषमादिशेत् ॥ ९ ॥ कृष्णानि तिलमात्राणि निरुजानि समानि च ॥ वातपित्तकफो-द्रेकाद्विद्यात्तांस्तिलकालकान् ॥ १० ॥ उत्कृष्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ शाल्मलीकंटकप्रख्या कफमारुतपित्तजाः ॥ ११ ॥ जायंते पिटिका यूनां ज्ञेयास्तामुखदूषिकाः ॥ महद्वा यदि वा स्वल्पं श्यावं वा यदि वासितम् ॥ १२ ॥ निरुजं मंडलं गात्रेन्यच्छ-मित्यभिधीयते ॥ क्रोधायासप्रकुपितो वायुपित्तेन सं-युतः ॥ १३ ॥ मुखमागत्य सहसा मंडलं विसृजत्यतः ॥ निरुजं तनुकं श्यावं मुखे व्यंगं तमादिशेत् ॥ १४ ॥

१ विरहथिया । २ हथियार । ३ तीभीधारकेक्षुरीसे । ४ मुहरसा, मूहा ५ झाँइया व्यंग, झाइरोग ।

कृष्णमन्यत्र वा गात्रे मुखे वा नीलिकां विदुः ॥ शिरा वेधैः प्रलेपैस्ताञ्जयेदभ्यंजनैस्तथा ॥ १५ ॥ लोध्रधान्यवचालेपस्तारुण्यपिटिकापहः ॥ तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ १६ ॥ सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम्॥वमनं च निहन्त्याशु पिटिकां यौवनोद्भवाम् ॥ १७॥ अंगुलस्य चतुर्थांशो मुखलेपो विधीयते ॥ स्थितिकालेन शुष्कत्वं शुष्को दूषयति त्वचम् ॥ १८ ॥ व्यंगानां लेपनं शस्तं रुधिरेण शशस्य च ॥ व्यंगे मंजिष्ठया कुर्याल्लेपनं मधुसंयुतम् ॥ ॥१९॥ अर्जुनस्य त्वचं वापि श्वेताश्वखुरजामषीम् ॥ अर्कक्षीरहरिद्राभ्यां मर्दयित्वा विलेपनात् ॥ २० ॥ मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम्॥ तैलस्य प्रतिमर्शात्तु त्रिसप्ताहं कृता ध्रुवम् ॥ २१ ॥ नश्यंति गंडपिटिकाः पापौघा इव धर्मतः ॥

## अथ कुंकुमादितैलम् ।

कुंकुमं चंदनं पत्रमुशीरं कमलोत्पलम् ॥ २२ ॥ गोरोचनाहरिद्रे द्वे मंजिष्ठा मधुयष्टिका॥मारिवा लोध्रपत्तंगकुष्ठगैरिककेसरम् ॥ २३ ॥ स्वर्णक्षीरी प्रियंगुश्च कालेयं रक्तचन्दनम्॥ एतैरक्षसमैर्भागैस्तैलप्रस्थं विपा-

---

१ तरुणिका फोडा । २ शपेदघोडेका श्वेतनख । ३ मदमांडचोख ४ कालाअगर । ५ एककर्ष तोलामर । ६–ऽ१॥सेर ।

चयेत् ॥ २४ ॥ अभ्यंगाद्राजपत्नीनां नराणां धनिनां तथा॥ नीलिकां पिटिकां व्यंगां नीलिकां मुखदूषिकाम्॥२५॥ कृष्णतां च शरीरस्य दुश्छविं च विवर्णताम् ॥ नाशयित्वाऽशु जनयेद्रूपं चाऽतिमनोहरम् ॥२६॥ पद्मकेशरवर्णाऽभं मुखं भवति कांतिमत् ॥ २७ ॥ राजिका सुसंबीजं च नागरं समभागिकम् ॥ पिष्ठा शीतलतोयेन लेपाच्छायां हरेत्तनोः ॥२८॥ परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥ पादयोः कुरुते दारिं सरुजां तलसंस्थिताम् ॥ २९ ॥ पाददारीति च शिरां व्यधयेत्तत्र शोधिनीम् ॥ स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः ॥ ३० ॥ मधूच्छिष्टवसामज्जाघृतक्षीरविमिश्रितैः ॥ सर्जाह्वसिन्धूद्भवयोश्च चूर्णं मधुघृतप्लुतम् ॥ ३१ ॥ निर्मथ्य कटुतैलाक्तं हितं पादप्रलेपनम् ॥ ३२ ॥

## अथनखकुष्ठरोगः।

नखमांसमधिष्ठाय वातपित्तं च देहिनाम् ॥ कुरुते दाहपाकौच तं व्याधिं विषमाँदिशेत् ॥ ३३ ॥ चिर्प्पं शोणितमोक्षेण शोधनैः समुपाचरेत् ॥ शस्त्रेण

---

१ सोषाबीज । २ व्यधायरोग । ३ विवायरोग । ४ मोम । ५ चर्बी बकरीकी । ६ करायल । ७ नख कुष्ठकम् इ० भा० । ८ चीफ नखकुष्ठ, चेफ ।

तु यथायोगमुत्कृत्य स्रावयेद्व्रणम् ॥ ३४ ॥ दाडिमकुसुमयवासेरभयासुश्लक्ष्णचूर्णितालेपात्॥ नखकोटिपूतिभावं शमयति शूलं च तत्क्षणतः ॥३५॥ स्वरसेन हरिद्रायाः पात्रे कृष्णाऽयसेऽभया ॥ पिष्टा तक्रेण कल्केन लिंपेच्चिप्पं पुनः पुनः ॥३६॥ अन्तर्धूमविदग्धस्य हारितालान्वितस्य च ॥ तंडुलीयकमूलस्य चूर्णं पूतिनखापहम् ॥३७॥ अरूंषि बहुवक्राणि बहुक्लेदीनि मूर्द्धनि ॥ कफासृक्कृमिकोपेन नृणां विंद्यादरूंषिकाम्॥ ॥ ३८ ॥ अरूषिकां जलौकाभिर्माहयेद्बहुशो भिषक्॥ प्रक्षालयेन्मुहुस्तक्रसैंधवक्वाथवारिभिः ॥ ३९ ॥ मुहुर्मुहुस्ततो लिंपेत्पटोलाऽरिष्टवासकैः ॥ कपालं भृष्टकुष्ठस्य चूर्णं वा तैलसंयुतम् ॥ ४० ॥ लेपादरुंषिकाकंडूक्लेददाहार्तिनाशनम् ॥ ४१ ॥

## अथ हरिद्रादितैलम्।

हरिद्राद्वयभूनिम्बत्रिफलाऽरिष्टचन्दनैः ॥ एतत्तैलमरूंषीणां सिद्धमभ्यंजने हितत् ॥ ४२ ॥ दारुणा कण्डुरा रूक्षा केशभूमिः प्रपद्यते ॥ कफमारुतकोपेन विंद्यादारुणकं तु तत् ॥४३॥ दारुणे च शिरां विन्ध्ये-

---

१ चीफ चिप्प, चेफ। २ रहूँगृहार्णवरज। ३ पूतिनख चेफ। ४ रूशीरोग। ५ हांडी कपार, खपडोई, आदमीकी खपडोईका चूर्ण भस्म। ६ दारुण रूसी वा वांदखोरा।

त्स्निग्धस्विन्नां ललाटजाम् ॥ अवपीडशिरोरेकानभ्यं-
गांश्चावचारयेत् ॥ ४४ ॥ कोद्रवाणां तृणक्षारपानीयं
परिधावने॥कुर्यादारुणके मूर्ध्नि प्रेलेपो मधुसंयुतः॥४५॥
प्रियालबीजमधुककुष्ठमाषैस्ससैन्धवैः ॥ गुंजाफलशृतं
तैलं भृंगराजरसेन च ॥ ४६ ॥ केण्डूदारुणहृत्कुष्ठ-
कपालव्याधिनाशनम् ॥ ४७ ॥

## अथ भृङ्गराजतैलम् ।

भृंगराजत्रिफलोत्पलसारिलोहपुरीषसमान्वितका-
रि ॥ तैलमिदं पचदारुणहारि लुंचितकेशघनस्थि-
रकारि ॥ ४८ ॥

## अथेन्द्रलुप्तरोगनिदानचिकित्सा ।

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥ प्रच्या-
वयति रोमाणि ततः श्लेष्मा सशोणितः ॥ ४९ ॥
रुणद्धि रोमकूपांश्च ततोऽन्येषामसंभवम् ॥ तदिंद्रलु-
प्तं खालित्यं रुजेति च विभाव्यते ॥ ५० ॥ इन्द्र-
लुप्ते शिरां मूर्ध्नि स्निग्धस्विन्नस्य मोक्षयेत् ॥ कल्कैस्स-
मरिचैर्लिप्याच्छिलाकाशीसतुत्थकैः ॥ ५१ ॥ तिक्ता-

१ खजुरी । २ बादखोरा । ३ शिरफुंदी । ४ लोहमल, लोहकीटी ।
५ बादखोरा । ६ बारका झरजाना, चाईचूई, गंज । ७ चटनी, गंज ।

पटोलीपत्रस्वरसैर्घृष्टा शमं याति ॥ चिरकालजापि रुज्या नियतं दिवसत्रयादेव ॥ ५२ ॥ इंद्रलुप्ता-पहो लेपो मधुना बृहतीरसः ॥ हस्तिदन्तमर्षी कृत्वा छागदुग्धं रसांजनम् ॥ ५३ ॥ लोमान्यनेन जायंते नृणां पादतलेष्वपि ॥ ५४ ॥ मालतीकरवीरा-ऽग्निनक्तमालाविपाचितम् ॥ तैलमभ्यंजने शस्तमिन्द्र-लुप्तहरं परम् ॥ ५५ ॥ अवगाढं प्रच्छयित्वाकेशभूमिं पुनःपुनः ॥ गुंजाफलैश्चिरं लिम्पेदिन्द्रलुप्तप्रशांतये ॥ ॥ ५६ ॥ धात्रीफलद्वयं पथ्ये द्वे तथैकं विभीतकम् ॥ लोहचूर्णस्य कर्षं तु दशाऽर्द्धं चुतमज्जनः॥५७॥ पिष्टा लोहमये भांडे स्थापयेदुषितं निशाम् ॥ लेपोऽयं हंति न चिरादकालपलितं महत् ॥ ५८ ॥ कक्षाभागे-षु ये स्फोटा जायंते मांसदारुणाः ॥ अन्तर्दाहज्वर-करा दीप्तपावकसन्निभाः ॥ ५९॥ तमग्निरोहिणीं विद्या-दसाध्यां सन्निपातजाम्॥ सप्ताहाद्द्वादशाहाद्वा पक्षाद्वा हंति मानवम् ॥ ६० ॥ रोहिण्यां लंघनं कुर्याद्रक्तमोक्षं विरूक्षणम् ॥ पित्तवीसर्पविधिना साधयेदग्निरोहि-णीम् ॥ ६१ ॥ प्रवाहणाऽतिसाराभ्यां निर्गच्छति गुदो बहिः ॥ रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ ६२ ॥

---

१ चांदखोरा । २ कडजवृक्ष । ३ लंघन; उपवास ।

गुदभ्रंशगुदं स्विन्नं स्नेहेनाक्तंप्रवेशयेत्॥कमलं पद्मिनीपत्रं खादेद्वा शर्करान्वितम् ॥ ६३ ॥ स्नानोद्वासनहीनस्य मलो वृषणसंश्रितः॥ प्रक्लिद्यते यदा स्वेदात्स कंडूं जनयेत्तदा ॥ ६४ ॥ कंडूयनात्ततःक्षिप्रं स्फोटः स्रावश्च जायते॥ प्राहुर्वृषणकच्छूं तां श्लेश्मरक्तप्रकोपजाम् ॥ ॥ ६५ ॥ सर्जाह्वकुष्ठसैंधवसितसिद्धार्थैः प्रकल्पितो योगः ॥ उद्वर्तनेन नियतं शमयति कण्डूमनायासम् ॥ ॥ ६६ ॥ प्रायेण क्षुद्ररोगेषु शस्त्रक्षाराऽनिलक्रिया ॥ लेपनं शोणिता कृष्टिरिति सामान्यसंग्रहः ॥ ६७ ॥

## अथोष्ठस्फोटरोगः ।

अनूपमांसं यवमाषदुग्धदध्यादिनां सेवनतः प्रकोपम् ॥ उपेत्य दोषा वदनेषु कुर्युः कफोत्तरान्रोगचयाननेकान् ॥ ६८ ॥ दाल्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥ चीयते सरुजौ पित्तात्पिटिकाभिः समंततः ॥ ६९ ॥ कफादोष्ठौ च भवतः पिच्छिलौ शीतलौ गुरू ॥ अनेकपिटिकाव्याप्तौ सन्निपाताद्रुजान्वितौ ॥ ७० ॥ रक्ताद्रक्तोपसृष्टौ च शोणितं स्रवतो भृशम् ॥ ७१ ॥ दन्तमूलमुखकंठजा गदाः

---

१ जिसका मलाशय हीन होगया हो । २ अंडकोशकी खजुरी । ३ कण्डूरद्रु ।

प्रायशोऽस्रकफकोपजा मताः॥ तेषु दुष्टरुधिरं मुहुर्मुहु-र्स्रावयेदवहितो भिषग्वरः ॥ ७२ ॥ श्रीवेष्टकं सर्जरसं पुरं च देवद्रुमं यष्टिमधूकसारम् ॥ संचूर्ण्य सर्वं प्रयतो-विदध्यात्संघर्षणं मानव ओष्ठरोगे ॥ ७३ ॥ पित्तोद्भवे शीतलवारिसेको वांतिर्विरेको हि घृतस्य पानम् ॥ कफात्मके मूर्ध्नि विरेचनं स्यान्नस्याऽतिधूमः कवल-ग्रहाश्च ॥ ७४ ॥ क्षारो व्योषं क्षौद्रयुक्तं निहन्यादोषे जाते घर्षणेनाशु रोगम् ॥ धान्यं रालो गैरिकं सिक्थ-मेतैः सिद्धं तैलं सर्पिरोष्ठव्रणं वा ॥ ७५ ॥ प्रियंगु त्रिफला लोध्रं सक्षौद्रं प्रतिसारणम् ॥ हितं वा शतधौतेन घृतेन परिलेपनम् ॥ ७६ ॥ ज्योतिष्मतीलोध्रककुष्ठदार्वी-पाठासमंगाकटुकाघृतानाम् ॥ तेजाह्वया ग्रंथिक-संयुतानां चूर्णेन दंतेषु विघर्षणानि ॥ ७७ ॥ कुर्या-त्ततो नाशमुपैति रक्तस्रावो व्यथा मांसविशीर्णता च शिरोविरेको रुधिरस्य मोक्षो नस्यं हितं स्निग्धसुभोजनं च ॥ ७८ ॥ सपंचलवणक्षारः सक्षौद्रः प्रतिसारणम् ॥ विस्राविते दंतवेष्टे पूयस्रावि व्रणे हितम् ॥ ७९ ॥ तिलकल्कोदकैः शस्तो गंडूषो दन्तचालने ॥ मुखरोगे दन्तहर्षे तिलकल्कः सदा हितः ॥ ८० ॥ बकु-

१ श्रीवेष्ट धूप । २ राल । ३ गुग्गुल । ४ देवदारु चीड । ५ मुलहठी । ६ करायल । ७ मोम । ८ गिराना । ९ रगडना । १० मांसका बिथराना । ११ मुखमंजन, मिस्सी । १२ कुल्ला । १३ हिलनेपर । १४ दंतहर्ष, दांतगोठिल ।

लोध्रवपत्रचर्वणं चलदन्तस्थिरताकरं परम् ॥ घृत-पिप्पलिमाक्षिकं मुखे विधृतं दंतचलत्वशूल-जित् ॥ ८१ ॥ दन्तक्रिमिहरं कोष्णं हिंगु दंतांतरे स्थितम् ॥ उष्णतैलाज्यवातघ्नैर्हिताश्च कवलग्रहाः ॥ ॥८२॥ बृहतीभूमिकदंबकपंचांगुलकंटकारिकाक्वाथः ॥ गंडूषस्तु सतैलः कृमिजां दंतव्यथां हंति ॥ ८३ ॥ दन्तीसुवर्णदुग्धाकाशीसविडंगवत्सकबीजानाम् ॥ चूर्णं स्नुगऽर्कदुग्धैर्दंतच्छिद्रेषु पूरणं शस्तम् ॥ ८४ ॥ दंत-धावनरूक्षान्नमम्लं शीतांबु वर्जयेत् ॥ लेखनात्स्फुटिता जिह्वा प्रसुप्ता नीलवर्णका ॥ ८५ ॥ पित्तात्सदाहा-दीर्घैश्च सरक्तैः कंटकैर्वृता॥ कफेन गुर्वी बहला मांसो-द्भूयैः सकंटकैः ॥ ८६ ॥ जिह्वागतविकाराणां शस्तं शोणितमोक्षणम् ॥८७ ॥ गुडूचीपिप्पलीनिम्बक्वाथस्य कवलग्रहः ॥ पटोलकटुकाव्योषपाठासैंधवभार्गि-भिः ॥८८॥ चूर्णो मधुयुतो लेपः कवलो मधुतैलिकः ॥ विडंगपिप्पलीभ्यां तु धावनं सुरसांजनम्॥८९॥ गृह्णी-यात्कवलं वापि गौरसर्षपसैंधवैः ॥ उपजिह्वं तु संलि-प्य क्षारेण प्रतिसारयेत् ॥ ९० ॥ शिरोविरेकगंडू-षलेपैश्चैनामुपाचरेत् ॥ व्योपक्षाराऽभयावह्निचूर्णमेत-त्प्रघर्षणम् ॥ ९१ ॥ उपजिह्वोपशान्त्यर्थमेभिस्तैलं

---

१ रेंड। २ दतुइन। ३ मुंजा। ४ खटाई।

विपाचयेत् ॥ ९२ ॥ वासाक्वाथो माक्षिकगूढधूम-मालतीयुक्तः । उपजिह्वामधिजिह्वां कठिनामपि क्षिणोति घर्षणतः ॥ ९३ ॥

## अथ कंठरोगोपक्रमः ।

दीर्घः शोफस्तालुमूले प्रवृद्धः श्लेष्माऽसृग्भ्यां ध्मातवस्तिप्रकाशः॥ तृष्णाकासश्वासकृत्तं वदंति व्याधिं वैद्याः कंठशुण्डीति नाम्ना ९४ ॥ क्षिप्त्वा तां व्योषसिंधूत्थवचाक्षौद्रैश्च घर्षयेत् ॥ गलशुंडी क्षयं याति वज्रीक्षीरेण लेपिता ॥ ९५ ॥ निहंति गलशुंडी च शेफालीमूलचर्वणम् ॥ पिचुमंदकषायेण कवलं तत्र धारयेत् ॥ ९६ ॥ हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥ कटुकाऽतिविषादारुपाठामुस्तकलिंगकाः ॥ ९७ ॥ गोमूत्रक्वथिताः पीताः कंठरोगविनाशकाः ॥ तालुपाके विधातव्यं विधानं पित्तनाशनम् ॥ ९८ ॥ साध्ये च रोहिणीरोगे हितं शोणितमोक्षणम् ॥ ९९ ॥ घर्षणं धूमपानं च गंडूषानस्यकं हितम् ॥ सुखोष्णान्स्नेहकवलान्पंचमूलाम्बुनस्तथा॥१००॥ तेजोवती दारुनिशा सपाठा रसांजनं क्षारकणे विचूर्ण्य ॥ क्षौद्रेण कुर्याद्वटिकां मुखेन तां धारये-

---

१ धूमरज । रहूँ । २सोहागाकालावा । ३ गलेकी शुंडी । ४ शेफाली मेउडी । ५ तेजबळ लकडी . तेजीका पेड ।

त्सर्वगलाऽमयेषु ॥ १०१ ॥ मुखपाके शिरावेधः शिरः-कायविरेचनम् ॥ कायं च बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ १०२ ॥ जातीपत्रफलत्रिकाऽमृतलतादार्वीनिशायासको द्राक्षाभिः क्वथितं जलं मधुयुतं गंडूषसंधारणात् ॥ हंत्येतान्मुखजान्गदान्बहुविधाञ्जम्ब्वाम्रजातीजपाधात्रीनिम्बपटोलपत्रविहितः क्वाथो हि धार्यो मुखे ॥ १०३ ॥ जातीफलं जातिपत्री फणिज्जं बाह्लिकं गुडम् ॥ गुटिकाऽस्ये धृता चैषां पूतिगंधहरा भवेत् ॥ १०४ ॥ कुष्ठेलावालुकं मुस्ता धान्येलामधुयष्टिका ॥ रसोनमहिलागंधं नाशयेत्कवलग्रहः ॥ १०५ ॥

इति श्रीगौडवंशोद्भवश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे क्षुद्ररोगमुखरोगनिदानचिकित्साकथनं नाम चतुर्दशोल्लासः ॥ १४ ॥

## अथ कर्णरोगनिदानचिकित्सा ।

यदा श्रोत्रगतो वायुः समंतात्परिसंचरन् ॥ कर्णयोः कुरुते शूलं कर्णशूलः स उच्यते ॥ १ ॥

---

१ चबना । २ फणिज, मरुआरफूल, नादवोय । ३ केसरि । ४ वालुकं, रेलुका, गुलाबीमर्चि । ५ महिला, गंधप्रियंगुवारेलुका ।

## कर्णनादः ।

कर्णस्रोतःस्थिते वाते श्रूयंते विविधाः स्वराः ॥ भेरी-मृदंगशंखानां कर्णनादः स उच्यते ॥ २ ॥

## बधिरत्वम् ।

वायुः शब्दवहं श्रोत्रमावृत्य परितिष्ठति ॥ शुद्धश्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥ ३ ॥

## कर्णस्रावः ।

शिरोऽभिघातादुदके मज्जनाद्वा प्रपाकतः ॥
कर्णोऽनिलात्स्रवेत्पूयं स कर्णस्राव उच्यते ॥ ४ ॥

## कर्णकीटः ।

पतंगाः शतपद्यश्च कर्णमार्गे प्रविश्य हि ॥ व्याकुलत्वमसंतोषं भृशं कुर्वंति वेदनाम् ॥ ५ ॥ कर्णो निस्तुद्यते तेन तथा फरफरायते ॥ कीटे चरति रुक्पीडा निंष्यन्दे मंदवेदना ॥ ६ ॥ कर्णशूलेषु सर्वेषु स्निग्धं स्विन्नं विरेचयेत् ॥ भुक्तोपरि हितं सर्पिः कोष्णं दुग्धं च पाचयेत् ॥ ७ ॥ शृंगबेरमधुसैंधवतैलं कर्णगं सपदि शूलविनाशी ॥ आर्द्रकस्य लशुनस्य रसो वा सैंधवेन सह कर्णगदघ्नः ॥ ८ ॥ कदल्याः स्वरसः

---

१ फतींगन फतिंगा । २ गोजर । ३ फैकना । ४ ठंढा ।

श्रेष्ठः कटुष्णः कर्णपूरणे ॥ कर्णे कोष्णेन सूक्तेन पूरणं वेदनापहम् ॥ ९ ॥ कर्णशूलं हरत्याशु कवोष्णं मूत्र-पूरणम् ॥ ससैंधवं छागमूत्रं कोष्णं कर्णव्यथापहम् ॥ १० ॥ पक्वाऽर्कपत्रमाज्येन लिप्तं वह्निप्रतापितम् ॥ आपीडच तोयं संसिक्तं कर्णशूलं भृशं जयेत् ॥ ११ ॥ राजिका पिप्पली हिंगु शताह्वा पुष्करमूलकम् ॥ चतु-र्गुणं सूक्तमेभिस्तैलं सम्यग्विपाचयेत् ॥ १२ ॥ बाधि-र्येनादशूलानि कर्णौ क्षिप्तं निहंति तत् ॥ गुडनागर-तोयेन नस्यं बाधिर्यनादहृत् ॥ १३ ॥ रसांजनं तु स्तन्येन घृतक्षौद्रेण संयुतम् ॥ प्रशस्यते चिरोत्थे तु संस्रावे पूतिकर्णके ॥ १४ ॥ कृमिकर्णगदे शस्तं सर्षपस्नेहपूरणम् ॥ वार्ताकैस्य हितो धूपो गुग्गु-लोः श्रेष्ठ उच्यते ॥ १५ ॥ पूरणं हरिता-लेन गवां मूत्रयुतेन च ॥ त्र्यूषणं चूर्णितं क्षिप्तं कर्णक्रिमिविनाशनम् ॥ १६ ॥ लार्मज्जक-घृतं वापि कर्णस्रावहरं परम् ॥ कृमिघ्नः, पूरितः कर्णे सिंदुवाररसोऽथवा ॥ १७ ॥ कदाचिदन्नं श्रवणे रंध्रे वै पूरितं भवेत् ॥ अथवा नासिकारंध्रे बहुदुःखं प्रजायते ॥१८॥रजतं लोहतारं वा पन्नगीफणिवत्कृत-म् ॥ तद्यंत्रेण समाकृष्य चतुरो वैद्यराट् शनैः ॥१९॥

१ कुटकी डंडी। २ कांजी। ३ कटेरी। ४ खस। ५ हींग।

सद्यः क्लेशहरो नृणां एष यत्नवरो मतः ॥ नान्योपायचिकित्सायां शस्त्रकर्माऽभिजानता ॥ २० ॥

पन्नगीयंत्रम् ।



## अथ पीनसरोगः ।

अरुचिः शिरसो जाड्यं नासास्रावस्तनुस्वरः ॥ क्षामष्ठीवे ततोऽभीक्ष्णमामपीनसलक्षणम् ॥ २१ ॥ स्वरशुद्धिर्घनश्लेष्मा परिपक्वस्य लक्षणम् ॥ पीनसेषु च सर्वेषु निवातागारगो भवेत् ॥ २२ ॥ सर्वस्मिन्पीनसे रोगे जातमात्रे तु मानवः ॥ दध्ना गुडेन मरिचं भुंजानो लभते सुखम् ॥ २३ ॥ चव्याऽम्लवेतसकटुत्रिकतिंतिडीकं तालीशवह्निगजकुंकुमपत्रकैलम् ॥ चूर्णीकृतं सजरणं गुडसंयुतं स्यात्कासाऽसपीनसहरं रुचिवह्निकारि ॥ २४ ॥ व्याघ्रीवचाशिग्रुदन्तीसुरसाव्योषसैंधवैः ॥ संसिद्धं पाचनं तैलं पूतिनासागदापहम् ॥ २५ ॥ नासापाके च कर्तव्यं विधानं पित्तनाशनम् ॥ हरेद्रक्तं जलौकाभिः सेका लेपाश्च शीत-

क्ताः ॥ २६॥ सर्जोऽर्जुनोदुंबरवत्सकानां त्वचां कषायैः परिधावनीयः ॥ कषायकल्कैरपि सिद्धमेषांयुक्तं घृतं घ्राणविपाकनाशे ॥ २७ ॥ घृतगुग्गुलुसिक्थानां धूमः क्षवथुनाशनः ॥ सिद्धियोग वरो नृणां भिषग्भिः परिजानता ॥ २८ ॥ नासाशोषे क्षीरसर्पिः प्रधानं सिद्धं तैलं चानुकल्पेन नस्यम् ॥ सर्पिःपानं भोजनं जांगलैश्च स्नेहस्वेदौ स्नैहिकश्चापि धूमः ॥ २९ ॥ वेगसंधरणाजीर्णशोकमैथुनजागरैः॥स्वयं मूर्ध्निगता दोषाः प्रतिश्यायकरा मताः ॥ ॥ ३० ॥ शिरसः परिपूर्णत्वमंगमर्दः क्षवस्तथा ॥ उपद्रवाश्चाप्यपरे प्रतिश्याये पुरस्सराः॥३१॥ शंखयोर्निलात्तादौ गलताल्वोष्ठशुष्कता॥पित्तात्कृशोऽतिपांडुः स्यात्संतप्तो मानवो भृशम् ॥ ३२ ॥ कफात्मके स्रवेद्घ्राणाच्छ्वेतः पाण्डुः कफो मुहुः ॥ संपक्वोप्यविपक्वो वा भूत्वा नश्यति चासकृत् ॥ ३३ ॥ गलताल्वोष्ठशिरसां कंडुः सर्वभवः स्मृतः ॥ रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्तते ॥ ३४ ॥ आनद्धा पिहिता क्लिन्ना शुष्का नासा पुनःपुनः ॥ पूतिगंधश्च निश्वासो गंधान्न जानाति नो नरः ॥ ३५ ॥ इत्थं दुष्टप्रतिश्यायं कृच्छ्र-

---

१ राळ। २ मोम। ३ छींक। ४ प्रतिश्याय रेंटा, पोंटा, नेंटा, नाशामळ। ५ शंख, भौंहकेभीतर। ६ गीला।

साध्यं बुधा विदुः ॥ सर्व एव प्रतिश्यायाः कालेना-प्रतिकारिणः ॥ ३६ ॥ प्रतिश्यायं वचा युक्तं सक्तुधूमं पिबेन्नरः ॥ प्रतिश्यायं वचायाश्च चूर्णमाघ्राय नाशयेत्॥३७॥ चातुर्जातकचूर्णं वा घ्रेयं च कृष्णजीरकम्॥ बालमूलकयोर्यूषः कुलत्थोत्थश्च पूजितः ॥ ३८ ॥ क्वोष्णं दशमूलांबु जीर्णां वा मदिरां पिबेत् ॥ गुडार्द्रकं भक्ष्यमाणं प्रतिश्यायहरं परम् ॥ ३९ ॥ पिप्पल्यः शिग्रुबीजानि विडंगमरिचानि च ॥ अवपीडः प्रशस्तोयं प्रतिश्यायनिवारणः ॥ ४० ॥ घृतानि कटुसिद्धानि तीक्ष्णधूमाः कटूनि च ॥ भेषजान्युपयुक्तानि इन्युः सर्वप्रकोपजम् ॥ ४१ ॥ अश्वत्थस्य त्वचा क्षारं पिप्पलीगुडसंयुतम् ॥ खादेत्कर्षप्रमाणेन जीर्णश्लेष्महरं परम् ॥ ४२ ॥

## अथ नेत्ररोगाऽधिकारः।

बाष्पाऽवरोधबहुमैथुनशोकतापक्लेशप्रसक्तवमनप्रतिरोधनेन ॥ विण्मूत्रवातकृमिनिग्रहधूमयोगादत्युष्णतो हि नयने प्रभवंति रोगाः ॥ ४३ ॥ शिराऽनुसारिभिर्दोषैर्विगुणैरूर्द्ध्वमागतैः ॥ जायंते नेत्रभागेषु रोगाः परमदारुणाः ॥ ४४ ॥ वातात्पित्तात्कफाद्रक्तादभिष्यंदश्चतुर्विधः ॥ प्रायेण जायते घोरः सर्व-

नेत्रामयाकरः ॥ ४५ ॥ कष्टान्निमेष उन्मेषः सशल्यमिव लोचनम् ॥ सरागशोफमनिलान्मन्याशाखादिषु व्यथा ॥ ४६ ॥ दुष्टवाताभिधानोयमभिष्यन्दो निगद्यते ॥ वाताऽभिष्यंदके स्तम्भो निस्तोदः शिशिराश्रुता ॥४७॥ पित्ताऽभिष्यंदके दाहप्रपाकौ पीतनेत्रता ॥ कफाऽभिष्यंदो गुरुता नेत्रे शोफश्च शैत्यता ॥ ॥ ४८ ॥ रक्ताभिष्यंदे ताम्राश्रु व्यथा लोहितनेत्रता॥ वृद्धिंगतैरभिष्यंदैर्नराणामक्रियावताम् ॥ ४९ ॥ अधिमंथास्तु तावंतो नयने तीव्रवेदनाः ॥ अत्यर्थमुत्पादिते चैव नेत्रं निर्मथ्यतेऽनया ॥ ५० ॥ शिरसोऽर्द्धं च तं विद्यादधिमंथं स्वलक्षणैः ॥ नेत्रं रोगव्यथाशोफयुक्तमामान्वितं विदुः ॥ ५१ ॥ मंदवेदनता कंडूः पक्वं दोषं तमादिशेत् ॥ अंजनं पूरणं क्राथपानमामे न शस्यते ॥ ५२ ॥ ज्वरव्रणप्रतिश्यायचक्षुःकुक्षिगता गदाः ॥ पंचैते पंचरात्रेण प्रशमं यांति तत्क्षणात्॥५३॥ विरेचनं शिरावेधः स्वेदालेपनलंघनैः ॥ उपाचरेदभिष्यंदानंजनाश्चोतनादिभिः ॥ ५४ ॥ सेक आश्चोतनं पिंडीलेपस्तर्पणमंजनम् ॥ कल्कैरेभिर्भिषक्सम्यङ्नेत्रं नित्यमुपाचरेत् ॥ ५५ ॥ सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः ॥ मीलि-

१ अभिष्यंद आंखका बाहर लटकआना । २ लोहूँटपकना । ३ पोटरी ।

ताक्षस्य मर्त्यस्य प्रदेयश्चतुरंगुलात् ॥ ५६ ॥ सेको हि स्नेहनो वाते रक्तपित्ते च रोपणः ॥ लेखनश्च कफे चक्षुस्तेजोवृद्धिकरः परः ॥ ५७ ॥ एरण्डपत्रमूलत्वक्शृतमाजं पयो हितम् ॥ सुखोष्णं सेचनं नेत्रे वाताऽभिष्यंदनाशनम् ॥ ५८ ॥ स्यावीरं मधुकं तुल्यं घृतभृष्टं सुचूर्णितम् ॥ छागक्षीरे शृतं सेकात्पित्तरक्ताभिघातजित् ॥ ५९ ॥ त्रिफलालोध्रयष्टीभिः शर्कराभद्रमुस्तकैः ॥ पिष्टैः शीताम्बुना सेको रक्ताऽभिष्यंदनाशनः ॥ ६० ॥ श्वेतलोध्रं घृतभृष्टं चूर्णितं पटनिस्सृतम् ॥ उष्णांबुना विमर्दितं शेकाच्छूलघ्नमुत्तमम् ॥ ६१ ॥

## अथाश्चोतनम् ।

आश्चोतनं नैव कार्यं निशायां सिद्धिमिच्छता ॥ उन्मीलिते हि नयने बिन्दुभिद्व्यंगुलो घृतैः ॥ ६२ ॥ बिन्दवोष्टौ लेखने च स्नेहने दशबिन्दवः॥रोपणे द्वादश प्रोक्ताः शीते कोष्णाः सदा हिताः ॥६३ ॥ उष्णे च शीतरूपाः स्युः सर्वत्रैष विनिश्चयः ॥ वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् ॥ ६४ ॥ तिक्तोष्णरूक्षं च कफे क्रमादाश्चोतनं हितम् ॥ निमेषोन्मेषणं पुंसा-

१ स्यवीर ।

मंगुल्याश्छोटिका तथा ॥ ६५ ॥ गुर्वक्षरोच्चारणं वा- मात्रैषाऽश्चोतने मता ॥ बिल्वादिपंचमूलेन बृहत्येरण्ड- शिग्रुभिः ॥ ६६ ॥ क्काथमाश्चोतने कोष्णो वाताऽभि- ष्यंदनाशनः ॥ त्रिफलाश्चोतनं नेत्रे सर्वाऽभिष्यंद- नाशनम् ॥ ६७ ॥ स्त्रीस्तन्याश्च्योतनं नेत्रे रक्तपित्ता- ऽनिलाऽर्तिजित् ॥ ६८ ॥

## अथ पिंडी।

पिण्डी कवलिका प्रोक्तासूक्ष्मवस्त्रस्य पट्टकैः॥नेत्राऽ- भिष्यंदयोग्या सा व्रणेष्वपि निगद्यते ॥६९॥ अभि- ष्यंदेषु सर्वेषु बध्नीयात्पिंडिकां बुधः॥ एरण्डपंचमूल- त्वङ्निर्मिता वातनाशिनी ॥ ७० ॥ निम्बपत्रकृता पिण्डी श्लेष्मपित्तहरा मता॥अथवा त्रिफलापिण्डी श्ले- ष्मपित्तविनाशिनी ॥ ७१ ॥ पिष्ट्वा कांजिकतोयेन घृतभृष्टा च पिंडिका ॥ लोध्रस्य हरति क्षिप्रमभिष्यं- दमसृग्भवम् ॥ ७२ ॥ शुंठीनिम्बदलैः पिंडी सुखो- ष्णा स्वल्पसैंधवा ॥ पिधाय चक्षुःसंयोगाच्छोफकंडूव्य- थापहा ॥ ७३ ॥ सिन्धूत्थदार्वीमधुयष्टिताक्षैः सगैरि- कैः श्लक्ष्णजलेन पिष्टैः ॥ बहिःप्रलेपं नयनेषु कुर्याच कंडूं च हन्यान्नयने रुजं च ॥ ७४ ॥ रसांजनस्य वा

---

१ कानीअंगुरी। २ दीर्घअक्षरके उच्चारण १ दफे करनेसे १ मात्राहोतीहै। जैसे 'का' यह १ मात्रा भयाहै।

लेपः पथ्याविश्वदलैर्युतः ॥ वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः ॥ ७५ ॥ दग्ध्वाम्रौ सैन्धवं लोध्रं मधूच्छिष्टयुते घृते ॥ पिष्टमंजनलेपाभ्यां सद्यो नेत्ररुजापहम् ॥ ७६ ॥ लोहस्य पात्रे संघृष्टो रसो निंबुफलोद्भवः ॥ किंचिद्वह्नौ बहिर्लेपान्नेत्रबाधां व्यपोहति ॥७७॥ संचूर्ण्य मरिचं केशराजस्य रसमर्दनात् ॥ लेपनान्मर्दनान्नाशं करोत्येषः प्रयोगराट् ॥ ७८ ॥

## अथ तर्पणम् ।

यद्रूक्षं परिशुष्कं तु नेत्रं कुटिलमाविलम् ॥ तिमिराऽर्जुनशुक्राद्यैरभिष्यंदाऽधिमंथनैः ॥ ७९ ॥ युक्तं तत्तर्पणे योज्यं नेत्ररोगविशारदैः ॥ अत्युष्णशीतवर्षासु चिन्तायां संभ्रमेषु च ॥ ८० ॥ अशान्तोपद्रवे चाक्षिण तर्पणं न प्रयोजयेत् ॥ सर्पिषा शतधौतेन सुखोष्णेन जलेन वा ॥ ८१ ॥ निमग्नान्यक्षिपक्ष्माणि यावत्स्युस्तावदेव वा ॥ पूरयेन्मिलिते नेत्रे तत उन्मीलयेच्छनैः ॥ ८२ ॥ यावद्रोगप्रशांतिः स्यात्तावदेव तु धारयेत् ॥ मात्राणां नियमो नास्ति शतं वाथ सहस्रकम् ॥ ८३ ॥

## अथांजनम् ।

अंजनं पक्वदोषेषु कर्तव्यं भिषजा सदा ॥ हेमन्ते शिशिरे मध्ये दिनस्यांजनमिष्यते ॥ ८४ ॥

१ भंगरैयाबूटी। २ पलक ।

ग्रीष्मे शरदि पूर्वाह्णेऽपराह्णे वापि चेष्यते ॥ वर्षास्वनभ्रे नात्युष्णे वसंते च सदा हितम् ॥ ८५ ॥ अंजनं त्रिविधं ज्ञेयं स्निग्धं रोपणदीपनम् ॥ स्निग्धं तु मधुरं स्नेहं कषायं तिक्तरोपणम् ॥ ८६ ॥ लेखनं क्षारतीक्ष्णाऽम्लं सायं प्रातश्च शस्यते ॥ ८७ ॥

## अथ चंद्रोदयवर्त्तिः ।

शंखनाभिमरिचं मनश्शिला पिप्पली मधुककुष्ठकं वचा ॥ चेतना मधुविभीतकमज्जा छागिदुग्धविहिता खलु वर्तिः ॥ ८८ ॥ घर्षितांभसि हरेणुकमात्रा नाशयेन्नयनरोगमंजनात् ॥ मांसवृद्धितिमिराऽर्बुदपुष्पं वार्षिकं पटलकाचनिशांध्यम् ॥ ८९ ॥ करंजबीजवर्तिस्तु बहुशः परिभाविता ॥ पलाशपुष्पस्वरसैः चुक्रादीनां विनाशिनी ॥९०॥ मालतीनिम्बपत्राणि द्वे हरिद्रे निशाञ्जनम् ॥ गोशकृद्रससंयुक्ता वर्तिर्नक्तांन्धनाशिनी ॥ ९१ ॥ तुत्थमाक्षिकसितामनश्शिलाशंखसैन्धवसमुद्रफेनकम् ॥ गैरिकं समरिचं विचूर्णयेदञ्जनं मधुयुतं तिमिरघ्नम् ॥९२॥ क्षौद्राश्वैलालासंघृष्टं मरिचं चक्षुषोंऽजनम् ॥ नाशयेदतिनिद्रां तु यथा सूर्योद-

---

१ सबेरेसे पहरदिनतक । २ सबेरेसे दुपहरतक । ३ फूली । ४ रतौंधी । ५ टेसूफूल । ६ पटलरोग । ७ तेंदूका कासा ।

यस्तमः॥९३॥ पुनर्नवा तु दुग्धेन कंठस्रावं च सर्पिषा॥ पुष्पं तैलेन तिमिरं निशान्ध्यं कांजिकेन च ॥ ९४ ॥ नाशयेत्तत्क्षणादेव भास्करस्तिमिरं यथा ॥ बब्बूलद्लजः क्राथो घनीभूतो मधुप्लुतः ॥ ९५ ॥ नेत्रस्रावं जयेत्युग्रमंजनान्नात्र संशयः ॥ ९६ ॥ आमलकीफलरसो वस्त्रपूतः सुपूरणात् ॥ नेत्रयोः कोपमत्यर्थं प्रवहंति न संशयः ॥९७॥ शिग्रुपत्ररसः शेकान्मधुसैंधवसंयुतः ॥ नेत्रकोपं नवं हंति तथा सर्पिः पुरातनम्॥९८॥ दार्वी रसांजनं स्तन्ययुक्तं नेत्रे प्रपूरितम् ॥ निहंति वेदनादाहान्स्पंदकंडूसमायुतान् ॥ ९९ ॥ स्फटिकों चन्दनं शुण्ठीगिरिमृच्च वचा तथा ॥ एषां बहिः प्रलेपो हि नेत्ररोगान्निवारयेत् ॥ १०० ॥ भूम्याऽमलकसिन्धूत्थं ताम्रघृष्टं घनं तथा ॥ आमलक्या रसः सर्वनेत्ररोगनिवारणः ॥ १०१ ॥ अक्षमज्जांऽजनं सार्धं शुक्रं स्तन्येन नाशयेत् ॥ अभिघाताऽक्षिरोगघ्नं केवलं स्तन्यपूरणम् ॥ १०२ ॥ घृतेन मधुना वापि त्रिफलाया निषेवितः ॥ चूर्णकल्कोऽथवा क्राथः सकलं तिमिरं जयेत् ॥ १०३ ॥ त्रिफला व्योषसिन्धूत्थैर्घृतं सिद्धं पिबेन्नरः ॥ चक्षुष्यं भेदनं हृद्यं दीपनं कफनाशनम् ॥

---

१ गाढा । २ ढलकारोग । ३ नारीकादूध । ४ खटिका, गावखरी । ५ पहाडीश्वेतमिट्टी, वा कालमिट्टी । ६ नागरमोथा ।

॥ १०४ ॥ भ्रुवोरुपरि दाहश्च मंथे साध्ये शिराव्यधः॥ जलौकापातनं वापि नेत्रपाके विरेचनम् ॥ १०५ ॥ दिवास्वापं च ताम्बूलं मैथुनं परिवर्जयेत् ॥ १०६ ॥

## अथ गीलांजनम्।

द्विशिवामरीचिवसुभिर्लवंगं वेदसम्मितम् ॥ सांचिकाछदनीरेण छागीक्षीरेण पेषयेत् ॥ १०७ ॥ तां गोघृते द्विमासाभ्यां मधुतावन्मिते प्लुते ॥ ताम्रमुद्रादिभिः कांस्यभाजनोपरि घर्षयेत् ॥१०८॥हस्ते गद्दोरिकायास्तु याममात्रेण घर्षणात्॥ नेत्रांजिते हृतं दोषं तिमिरं धुंधविंदुकम् ॥ १०९ ॥ पटलं चांधकारं वा राज्यंधं च दिनांधताम्॥वातपित्तोद्भवा रोगा ये चान्ये नेत्रसंभवाः ॥ ११० ॥ ते सर्वे विलयं यांति सदाऽद्रांजनयोगतः ॥ १११ ॥

## पुनः।

पूगीफलार्द्धमादाय गोघृतेन विघर्षणात् ॥ कांस्यपात्रे द्विघटिका यदा कज्जलसंनिभम् ॥ ११२ ॥ तदा नेत्रांजनाच्छीघ्रं नेत्ररोगं हरेद् ध्रुवम् ॥ तदा शीतलतां याति रक्तनेत्रं न संशयः ॥ ११३ ॥

---

१ नशमें नशतरदेना । २ जोंक । ३ जुलाब । ४ तांवेका पैसा कचा (डब्बल) । ५ हथेली, गदोरी । ६ सूर्यके तेजसेवा धुआं लगनेसे वाजागरणसे ।

## पुनः ।

लौहांगुलीयकं चादौ चंद्रशूरासमश्शिवा ॥ कबाबा च लवंगानि कटुतैलेन संयुतम् ॥ ११४ ॥ घर्षयेद्रीतिभांडस्थे यदा कज्जलसन्निभम् ॥ तदा सीपिकया धृत्वा नेत्रांजनमहच्छुभम् ॥ ११५ ॥ वातरक्तं हरेद्रोगं पित्तवातं तथैव च ॥ पटलं धुंधुकारं च अतिशीतलताकृतम् ॥ ११६ ॥

## अथ शीसकभस्मांजनम् ।

शीसकं लोहपात्रस्थं धृत्वाऽग्निं ज्वालयेदधः ॥ बलिचूर्णं ततः क्षिप्त्वा भस्मैवं भवति ध्रुवम् ॥ ११७ ॥ तद्भस्म खल्वके क्षिप्त्वा सूक्ष्मचूर्णं तु कारयेत् ॥ नेत्रांजनं हरेद्व्याधिं धुंधमाणकपुष्पकम् ॥ ११८ ॥

## अथ शिरोरोगाः ।

दोषैः पृथक्समस्तैश्च क्षयेण कृमिशोणितैः ॥ सूर्यावर्त्ताऽनंतवातार्धावभेदकशंखकाः ॥ ११९ ॥ एकादश शिरोरोगा जायंते दुष्टभोजनात् ॥ मन्याग्रहोंगगुरुता पूर्वं तेषां प्रजायते ॥ १२० ॥ रुजोनिमित्तं शिरसश्च तोदा भवंति रात्रावधिकास्तु वातात् ॥ भृशोष्ण-

---

१ लोहकीअंगूठी । २ रीतिमांड, पीतरकी थारीपर । ३ सीपी, सुतुही, सीप । ४ औंरासारगंधक ।

मंगारचितं शिरो हि नासा तथा धूमवती च पित्तात् ॥ १२१ ॥ शिरो गुरु स्तब्धहिमं कफात्स्यात्सर्वाणि लिंगानि च सन्निपातात् ॥ रक्तात्मके पित्तसमानलिंगे स्पर्शासहत्वं शिरसो भवेच्च ॥ १२२ ॥ क्षयोत्थो हि शिरो रोगो भवेदुग्रप्रवेदनः ॥ स्वेदच्छर्दनधूमाऽस्रमोक्षो नस्यैर्विवर्द्धते ॥ १२३ ॥ भृशं यथा स्रवेद्घ्राणात्सलिलं कृमिजे गदे ॥ सूर्योदये मंदमंदमक्षिभ्रूषु व्यथा भवेत् ॥ १२४ ॥ सूर्यापवृत्तौ स्वल्पा स्यात्सूर्यावर्त इति स्मृतः ॥ गृहीत्वाऽर्द्धं च शिरसः सकफो वायुरुद्धतः ॥ १२५ ॥ मन्याभ्रूशंखकर्णाऽक्षिललाटाऽर्द्धेषु वेदनाम् ॥ शस्त्राऽरणिसमां तीव्रां कुर्यात्सोर्द्धविभेदकः ॥१२६॥तीव्ररुक्शंखकस्त्याज्यस्त्र्यहाद्भेषजया चरेत् ॥ वातिके दशमूलादिसिद्धक्षीरेण सेचनम् ॥ १२७ ॥ मुद्गमाषकुलत्थांश्च खादेद्वा निशि केवलान् ॥ कटुकोष्णान्ससर्पिष्कानुष्णं वापि पयः पिबेत्॥१२८॥ कुष्ठमेरण्डमूलं च लेपात्कांजिकपेषितम् ॥ शिरोरोगं जयेदाशु पुष्पं वा मुचकुंदजम् ॥ १२९ ॥ चर्मणा च शिरोबस्तिं प्रकल्प्य परिपूरयेत् ॥ तैलैरुष्णैर्निश्चलस्य विविधा हि रुजः शमम् ॥ १३० ॥ यामार्द्धं याममेकं वा तनोः स्वास्थ्यं भवेद्ध्रुवम् ॥ पित्तात्मके

१ मन्या, गळेकी पिछलीनस । २ भौंह, शंख । ३आधासीशी,-अधकपारी ।

शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ॥ १३१ ॥ निर्मज्जनं च शिरसो मुहुः शीतलवारिणि ॥ चंदनोत्पलकिंजल्कैर्बिसशालूकपद्मकैः ॥ १३२ ॥ दुग्धपिष्टैः प्रलेपः स्यात्सृतैर्वा परिषेचनम् ॥ रक्तजे पित्तवत्सर्वं लेपभोजनसेचनम् ॥ १३३ ॥ शीतोष्णयोश्च व्यत्यासो विशेषाद्रक्तमोक्षणम् ॥ कफजे लंघनं रूक्षस्वेदस्तीक्ष्णोष्णपाचनम् ॥ १३४ ॥ हरेणुनतशैलेयमुस्तैलागरुदारुभिः ॥ रास्नास्थौणेयनलदैरूक्षोष्णैर्लेपयेच्छिरः ॥ १३५ ॥ यवषष्टिकशाल्यन्नव्योषक्षारसमायुतम् ॥ संनिपाते क्रिया कार्या ज्ञात्वा दोषबलाऽबलम् ॥ १३६ ॥ कटुत्रिकं पुष्करदारुरास्नानिशाऽश्वगंधाविहितः कषायः ॥ निवारयत्याशु शिरोर्तिजालं नासानिपीतो बहुदोषजालम् ॥ १३७ ॥ बिल्वनागरजकल्कविमिश्रं क्षीरमाशु खलु नस्यतो जयेत् ॥ नागरं गुडयुतं नसि योज्यं सैंधवेन च कणा हि शिरोर्तिम् ॥ १३८ ॥

## षड्बिन्दुतैलम् ।

एरण्डमूलं मधुयष्टि रास्ना भृंगं विडंगं तगरं शताह्वा ॥ जीवंतिकासैन्धवनागराणि पिष्ट्वा क्षिपेत्कृष्णतिलस्य तैलम् ॥ १३९ ॥ आजं पयस्तैलविमिश्रितं

---

१ स्नान । २ मसींड । ३ लेपन । ४ हरेणु रेनुकादवा, गुलाबीमरचि । ५ कुकुरवंदा । ६ पोइशाग, वाकुल्फा ।

च चतुर्गुणे भृंगरसे विपक्कम् ॥ तद्बिन्दुषट्कं नसि संप्रयोज्यं शीघ्रं निहन्याच्छिरसो विकारान् ॥ १४० ॥ क्षयजे तु शिरोमूले कर्तव्यो बृंहणो विधिः ॥ कृमिजे व्योषबीजाह्वशिग्रुबीजैश्च नावनम् ॥ १४१ ॥ अजामूत्रयुतं नस्यं कर्तव्यं कृमिजित्परम् ॥ विडंगस्वर्जिकादन्तीहिंगुगोमूत्रसंयुतम् ॥ १४२ ॥ विपक्वसार्षपं तैलं कृमिघ्नं नस्यमुत्तमम् ॥ सूर्यावर्ते शिरावेधो नावनं क्षीरसर्पिषाम् ॥१४३॥ हितः क्षीरघृताभ्यासस्ताभ्यां चैव विरेचनम् ॥ मार्कवस्य रसश्छागक्षीरतुल्योऽर्कतापितः ॥ १४४ ॥ सूर्यावर्तं निहन्त्याशु नस्येनैष प्रयोगराट् ॥ १४५ ॥ अर्द्धावभेदके पूर्वं स्नेहः स्वेदो विरेचनम् ॥ नावनं शर्करायुक्तो बीजं राजादनस्य च ॥ १४६ ॥ ईषत्सलवणं तैलं कोष्णं वा नावने हितम् ॥ विडंगतिललेपेन नाशयत्यर्द्धभेदकम् ॥ १४७ ॥ शिरसि ते यदि शूलमतीव चेदुषसि दुग्धमतः पिब नासया॥परमचिंतितशक्तिकमादरादतितरामनुभूतमिदं मया॥१४८॥ सशर्करपयःपाने नालिकेरोदकं तथा ॥ घृतपूरादिसेचा वा सूर्यावर्ताऽर्द्धभेदयोः ॥ १४९॥ कुंकुमं च घृतं भृष्टं छागक्षीरे विपाचितम् ॥ ससितं नासया पीतं

१ बिजौरानींबु । २ नास । ३ नश्य नास । ४ नास । ५ चिरौंजीनास । ६ आधाशीशी । अधकपारी । ७ सबेरे, सूर्योदये । ८ नाकके राह । ९ घृतपूरा, केवल गायके घीका नास ।

सूर्यावर्ताऽर्द्धभेदजित् ॥ १९० ॥ सघृतं क्षीरपानं च नासयापि मुखेन च ॥ विधिरेष शिरोरोगे शंखके शर्करान्वितः ॥ १९१॥ अनन्तवाते कर्तव्यः सूर्यावर्त-हरो विधिः ॥ क्रुद्धो रूक्षादिभिर्वायुः शिरःकंपमुदीरयेत् ॥१९२॥ स्नेहस्वेदादिवातघ्नं नस्यं शस्तं च भोजनम्॥ शिरोवेधश्चै कर्तव्योऽनन्तवातप्रशान्तये ॥ १९३ ॥

## अथ प्रदररोगनिदानम् ।

मद्याऽतिपानमतिमैथुनगर्भपाताज्जीर्णाध्वशोकग-रयोगदिवाऽतिनिद्राः ॥ स्त्रीणामसृग्दरगदो भवतीति तस्य प्रत्युद्गतौ भ्रमरुजो दवथुप्रतापौ ॥ १९४ ॥ दौर्बल्यमोहमदपांडुगदाश्च तंद्रा तृष्णा तथाऽनिलरु-जो बहुधा भवंति ॥ तं वातपित्तकफजं त्रिविधं चतुर्थं दोषोद्भवं प्रदररोगमिमं वदंति ॥ १९५ ॥ वाताद्रूक्षं फेनिलं शोणमल्पं पित्तात्पीतं नीलकृष्णाऽरुणं स्यात्॥ श्वेतं रक्तं पिच्छिलं श्लेष्मकोपाद्दुर्गंध्युष्णं क्षौद्रवर्णं त्रिदोषात् ॥ १९६ ॥ शशास्रवर्णप्रतिभाससमानं ला-क्षारसेनापि समं तथा स्यात् ॥तदार्तवो शुद्धमतो वद-न्ति न रंजयेद्वस्त्रमिदं यदेतत् ॥ १९७ ॥ अँसृग्दरः

१ मौंह । २ नस्तसे फस्त ।

१ श्लोकः—स्त्रीरजोवस्त्रं गृह्णीयात्परीक्षार्थं भिषग्वरैः ॥ निरीक्ष्य साध्याऽसाध्यं

प्राणहरः प्रदिष्टः स्त्रीणामतस्तं विनिवारयेच्च ॥ सर्वेषु पूर्वं वमनं प्रदिष्टं रसेक्षुगंगोदकतर्पणेश्च ॥ १५८ ॥ मुद्गपर्णीविपक्वेन तैलेन पिचुधारणम् ॥ कर्तव्यं रक्तनासाय मर्दनाय सुखाय च ॥ १५९ ॥ निम्बतैलं पिबेद्वापि गोक्षीरेण समायुतम् ॥ मधुकं पद्मकं बीजं त्रपुषस्य शतावरी ॥ १६० ॥ विदारीमिक्षुमूलं च पिष्ट्वा धौतघृतप्लुतम् ॥ योऽन्यां शिरसि गात्रे च प्रदेहोऽसृग्दरापहः ॥ १६१ ॥ मंजिष्ठा धातकीपुष्पं लोध्रं नीलोत्पलानि च ॥ एतत्क्षीरेण पातव्यं स्त्रीणां प्रदरनाशनम् ॥ १६२ ॥ अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ॥ यथाबलं पिबेत्प्रातस्तीव्राऽसृग्दरनाशनम् ॥१६३॥रोहितकमूलकल्कं च पांडुरेऽसृग्दरे पिबेत्॥ कल्कः क्षौद्रेण दार्व्या वा श्वेतप्रदरनाशनः ॥ १६४ ॥ नागकेसरमापेष्य त्र्यहात्तक्रेण संपिवेत् ॥ तक्राऽशनरता सम्यक्श्वेतप्रदरशांतये ॥ १६५ ॥ रसांजनं क्षौद्रयुतं मूलं च तंदुलीयकम् ॥ तंदुलाम्बुयुतं पानं सर्वप्रदरनाशनम् ॥ १६६ ॥ कुशमूलं समाहृत्य पाययेत्तंदुलाम्बुना ॥ एतत्पीत्वा त्र्यहान्नारी प्रदरात्परिमुच्यते ॥ १६७ ॥ रसांजनं च लाक्षा च छागेन

---

१ पिचुकारी जैसे सुजाखमें मर्द लेता है । २खीरबीज । ३ घोरदेना। ४प्रदर, पेर, रज़ । ५ रोहुआंवास, सोन्हिया । ६ दारुहरदी । ७ सपेदरंगका पेर, पानी ।

पयसा पिबेत् ॥ दग्धां मूषकविष्ठां च लोहिते प्रदरे पिबेत् ॥ १६८ ॥ मिथ्याचाराद्बीजदोषाद्तिमैथुनसेवनात् ॥ स्त्रीणां तु योनिरोगाः स्युः प्रदुष्टेनार्तवेन च ॥१६९॥ परिप्लुता विप्लुता च वंध्योदावर्तका तथा ॥ चतुर्द्धा तु भवेद्योनिस्तस्या लक्षणमुच्यते ॥ १७० ॥ ( १ ) परिप्लुतायां जायंते ग्राम्यधर्मे रुजो भृशम् ॥ (२) विप्लुतायां सदा पीडा(३) वंध्या नष्टाऽर्तवा मता ॥१७१॥ (४) सफेनिलमुदावर्ताद्रजः कृच्छ्रेण मुंचति ॥ सदाहं क्षीयते रक्तं यस्यामालोहितक्षया ॥ १७२ ॥ सर्वेषु योनिरोगेषु वातघ्नः क्रम इष्यते ॥ स्नेहनः स्वेदनो वस्तिर्वातजायां विशेषतः ॥ १७३ ॥ वासाऽश्वगंधारास्नाभिः साधितं शूलहृत्पयः ॥ दन्तीगुडूचीत्रिफलाक्वाथैश्च परिषेचनम् ॥ १७४ ॥ नतव्याघ्रीदेवदारुकुष्ठसैंधवसाधितः ॥ तैलाश्मरीपिचुः पूतियोन्यामधिरक्तयोनि वै ॥ १७५ ॥ योन्यां बलासदुष्टायां सर्वरूक्षोष्णमौषधम् ॥ तैलं स्वादु यवान्नं च पथ्यादिष्टं प्रयोजयेत् ॥ १७६ ॥ पलाशधातकीजंबूसमंगा मोचसर्जकम् ॥ हितं चूर्णं च दुर्गंधे पिच्छले स्तंभ कंदले ॥ १७७ ॥ गुडूची त्रिफला रास्ना निशायुग्मं शतावरी ॥

१ मूसाकी लेंडी । २ तगर । ३ पिंचकारी देना ।

## अथ फलघृतम् ।

सहचरद्वे श्योनाके मेदाह्वा च पुनर्नवा ॥ १७८ ॥ कल्कीकृत्य घृतं प्रस्थं पचेत्क्षीरं चतुर्गुणम् ॥ तत्सिद्धं पाययेन्नारीं योनिशूलनिपीडिताम् ॥ १७९ ॥ पीडिता चलिता योनिर्निःस्सृता विवृता च या ॥ पित्तयोनिश्च विभ्रांता षंढयोनिश्च या स्मृता ॥१८०॥ प्रपद्यते ततः स्थानं गर्भं गृह्णाति चासकृत्॥ एतत्फलं घृतं नाम योनिदोषहरं परम् ॥ १८१ ॥

## अथ पुत्रोत्पादनविधिः ।

चतुर्थे दिवसे गच्छेद्दतौ पुष्टो नरोऽङ्गनाम् ॥ पुत्रः स्याच्छुक्रबाहुल्याद्दुहिता चार्तवाऽधिके ॥ १८२ ॥ सा तदा स च मुदा हि सव्यमुच्चार्य मंत्रकम् ॥ १८३ ॥

## अथ पुत्रकामार्थमंत्रः ।

ॐआंहिरसि आर्युरसि सर्वतः प्रतिष्ठांसि धाता निदधातु ब्रह्मवर्चसा भव दितिर्ब्रह्मा प्रजापतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥ १ ॥–॥ १८४ ॥

## अथ विधिः ।

तच्चित्तोत्तानदेहा स्त्री तिष्ठेद्यावच्छ्रमं त्यजेत् ॥ एवं सा सुतमाप्नोति रूपायुर्बलशालिनम् ॥ १८५ ॥

---

१ शेषजी । २ आयुद्वार । ३ प्रतिष्ठा ।

पिप्पली शृंगवेरं च मरिचं केसरं तथा ॥ घृतेन सह पातव्यं वंध्यागर्भप्रदं परम् ॥ १८६ ॥ नागकेसरपूगास्थिचूर्णं वा गर्भदं परम् ॥ पत्रमेकं पलाशस्य गर्भिणी पयसान्वितम् ॥ १८७ ॥ पीत्वा च लभते पुत्रं वीर्यवंतं न संशयः ॥ १८८ ॥ पुत्रजीवकमूलं क्षीरेणपिबेत्समूलं वा ॥ दारुकं क्षीरसहितं जनयति दीर्घायुषं पुरुषम् ॥ १८९ ॥ मुस्तं हरिद्रे कटुका विशाला कुष्ठं कणा दारुकमुत्पलाह्वम् ॥ काकोलियुग्मं त्रिफलं विडंगं मेदाद्वयं चंदनयुग्मरास्ने ॥ १९० ॥ प्रियंगुदंतीमधुकाऽजमोदावचाशताह्वाः कुसुमानि जात्याः ॥ द्वे सारिवे कट्फलकं तुगाह्वा सितापृथक्कर्षमिदं सहिंगु ॥ १९१ ॥ संचूर्ण्य प्रस्थप्रमितं घृतं स्याच्चतुर्गुणे गोपयसि प्रलोड्य ॥ ततः पचेद्गोमयवह्निना तत्सिद्धं भवेदस्य पलप्रमाणम् ॥ १९२ ॥ पिबेन्नरः स्त्रीषु वृषायते च वंध्यापि नारी लभते सुतांश्च ॥ १९३ ॥ स्थिरगर्भा च या नारी या च कन्याः प्रसूयते ॥ मृतवत्सा काकवंध्या या सूतेऽ-

---

१ पतङ्गुगवृक्ष । २ देवदारु, चीढ । ३ मोहरि । ४ काकोली १, क्षीरकाकोली २ । ५ मेद १, महामेदवृक्ष २ । ६ सपेदचंदन १, लालचंदन २ । ७ चमेलीका फूल । ८ सेतवोस्यांह रंगकीदुभभरियां लता । ९–१ तोलाभर । १० हींगभूजिके । ११–४ कुडवका (१) प्रस्थ ।

नायुषं मृतम् ॥ १९४ ॥ अचिराज्जनयेत्पुत्रान्नृप-दीर्घायुसंयुतान् ॥ नाम्ना फलघृतं ह्येतद्भारद्वाजेन निर्मितम् ॥ १९५ ॥

## लक्ष्मणाघृतम् ।

जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते ॥ अनुक्तं लक्ष्मणामूलं क्षिपेत्तत्र चिकित्सकः ॥ १९६ ॥ अर-ण्यगोमयेनात्र वह्निज्वालाविधिस्स्मृतः ॥ १९७ ॥

## वृद्धदारुघृतम् ।

वृद्धदारुकमूलेन घृतं पक्कं पयोन्वितम् ॥ एतद्-वृष्यतमं सर्पिः पुत्रकामः पिबेन्नरः ॥ १९८ ॥

## अथ गर्भिणीलक्षणम् ।

छर्दिरुद्विग्नता गंधादशुभात्संप्रजायते ॥ प्रसेको वपुषः सादो गर्भिण्या लक्षणं स्मृतम् ॥ १९९ ॥ ह्रीबेरारलुरक्तचन्दनवचाधान्याकवत्सादनीमुस्तोशीर-यवासपर्पटविषाक्काथं पिबेद्गर्भिणी ॥ नानावर्णरुजा-तिसारकगदे रक्तस्रुतौ वा ज्वरे योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः ॥ २०० ॥

## गर्भस्रावे क्वाथः ।

अनंता सारिवा पद्मा रास्ना मर्कटमुत्पलम् ॥ गव्येन पयसा पीतं गर्भस्रावहरं परम् ॥ २०१ ॥

---

१ श्यामालता, दुधवरिया लता, गौरीसर ।

## पुनः ।

शृंगाटकबिसं द्राक्षा कसेरु मधुकं सिता ॥ गोदुग्धेन समं पेष्य पीतं गर्भच्युतिं जयेत् ॥ २०२ ॥

## बालनिष्कासनम् ।

शालिपर्ण्यास्तु मूलं हि सुपिष्टं तंदुलांबुना ॥ नाभिवस्तिभगालेपात्सुखं नारी प्रसूयते ॥ २०३ ॥ मातुलुंगस्य मूलानि मधुकं मधुसंयुतम् ॥ घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ २०४ ॥ तुंबीपत्रं सलोध्रं च समभागं च कारयेत् ॥ दद्याल्लेपं भगस्येमं प्रसूताप्यक्षता भवेत् ॥ २०५ ॥ वेतसस्य तु मूलानि क्वाथयेन्मृदुवह्निना ॥ भगः प्रक्षालितस्तेन गाढत्वमुपगच्छति ॥ २०६ ॥ पलाशोडुम्बरफलं तिलतैलसमन्वितम् ॥ मधुना योनिमालिप्य गाढीकरणमुत्तमम् ॥ २०७ ॥ वायुःप्रकुपितः कुर्यात्संरुध्य रुधिरच्युतम् ॥ सूताया हृच्छिरोवस्तौ शूलं मक्कल्लसंज्ञितम् ॥२०८॥ पृथिव्यां पातिते बाले योनिपीडनमिष्यते ॥ लंघनाऽभ्यंजनस्वेदाः कर्तव्याश्च ततः क्रियाः ॥ २०९ ॥ यवागूं कटुतिक्तोष्णां पाययेन्मधुनान्विताम् ॥ त्रिरात्रं च निषेवेत पश्चात्कार्यं

१ सेवनसे ।

विशोधनम् ॥ २१० ॥ यवक्षारं पिबेत्तत्र घृतेनोष्णोदकेन वा ॥ त्रिकटु त्रिजातधान्याकं प्राचीनं गुडमिश्रितम् ॥२११॥ सूतिकारोगशूलं च रोगं मक्कल्लसंज्ञिकम् ॥ हरेत्कुव्याधिं नारीणां हर्षदं पुष्टिवर्द्धनम् ॥ २१२ ॥ त्र्यूषणं पिप्पलीमूलं दारुचव्यं सचित्रकम् ॥ रजन्यौ हपुषाजाजी सक्षारलवणत्रयम् ॥ २१३ ॥ कल्कं मुस्ताम्बुना पीत्वा सुखेनाशु विरिच्यते ॥ मक्कल्लशूलरोगांश्च हरेन्नारी न संशयः ॥ २१४ ॥

## अथ सूतिकारोगः ।

कंपः प्रलापो गुरुता शरीरे ज्वराऽतिसारौ सदनं पिपासा ॥ एतानि चिह्नानि भवंति यस्मिंस्तं सूतिकारोगमुदाहरंति ॥ २१५ ॥ सूतिकारोगशान्त्यर्थं कुर्याद्वातहरीं क्रियाम् ॥ स्वेदोपनाहनाऽभ्यंगाः शस्यंते साऽवगूहनाः ॥ २१६ ॥ दशमूलभवं क्वाथं कोष्णं सर्पिर्युतं पिबेत ॥ सूतिकारोगनाशाय पिबेद्वा वारुणीं सुराम् ॥ २१७ ॥ सुतप्तं लोहमाकृष्य वारुण्यां तु निधापयेत्त ॥ सूतिकोपद्रवान्सर्वान्हंति पीता न संशयः ॥ २१८ ॥ अमृतानागरसहचरभद्रोत्कटपंचमूलजलदनलम् ॥ शीतं पीतं मधुना सह शमयति सूतिकातंकम् ॥ २१९ ॥

---

१ शोधनकर्म । २ पोढाई । ३ हाऊबेरं । ४तीनोंलोन ।५ बकवाद बोलना । ६ रुद्राक्ष । ७ लंकापीपारि ।

## अथ स्तनशुद्धिः।

पटोलनिंबाऽसनदारुपाठा मूर्वा गुडूची कटुरोहिणी च ॥ सनागरास्त्वाक्कथिताः समस्ता धात्री पिबेत्स्तन्यविशुद्धिहेतोः ॥ २२० ॥

## अथ कुचकाठिन्यता।

श्रीपर्णिकल्कस्वरसेन सिद्धतैलं ततस्तूलपिचुप्लुतं सत् ॥ स्तनोपरिष्ठाद्धृतमासमेकं कुचौ प्रकुर्यात्कठिनौ भृशोच्चौ ॥ २२१ ॥

## अथ बालरोगनिदानचिकित्सा।

त्रिविधः कथितो बालो क्षीरान्नोभयवर्द्धनः॥ तदेव भेषजं कार्यं महतां यज्वरादिषु ॥ २२२ ॥ वातदुष्टं पिबेत्स्तन्यं बद्धविण्मूत्रमारुतः ॥ पित्ताद्भिन्नमलो बालः कामलापित्तरोगवान् ॥२२३ ॥ कफदुष्टं पिबन्क्षीरं लालालुः श्लेष्मरोगवान् ॥ शिरस्तीव्रां रुजं सम्यग्रोदनाल्लक्षयेद्भिषक् ॥ २२४ ॥ भेषजं जातमात्रस्य विडंगफलमात्रकम् ॥ मासेमासे प्रयोक्तव्यं विडंगानां विवर्द्धनम् ॥ २२५ ॥ वर्षादूर्ध्वं कुमारस्य दद्यात्कौलाऽस्थिमात्रकम् ॥ क्षीरादस्यौषधं धात्र्याः क्षीरान्नादस्य चोभयोः ॥ २२६ ॥ आत्मन्यन्नाशिनो

---

१ नारी, स्त्री। २ चोपडना।

देयमौषधं तैलजं सदा ॥ यथारोगं कुचौ लिप्तं भेषजं पाययेच्छिशुम् ॥२२७॥ सर्वं निवार्यते बाले स्तन्यं न प्रतिवार्यते ॥ स्तन्याऽभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥ २२८ ॥

## अथ नाभिशोफे ।

मृत्पिंडेनाग्निवर्णेन क्षीरयुक्तेन सोष्मणा ॥ स्वेदयेदुत्थितां नाभिं शोफस्तेनोपशाम्यति ॥ २२९ ॥

## अथ नाभिपाके ।

नाभिपाके निशालोध्रप्रियंगुमधुकैः समैः ॥ तैलमभ्यंजने शस्तमेभिर्वाभ्यवचूर्णितम् ॥ २३० ॥ स्तन्यं गृह्णाति नो बालो जिह्वां तस्य प्रघर्षयेत् ॥ पथ्याधातृमधुघृतसैंधवैः श्लक्ष्णपेषितैः ॥ २३१ ॥ मुस्ताऽभयावचाब्राह्मीकल्कं समधु सर्पिषा ॥ वर्णायुःकीर्तिजननं लेहं बालाय दापयेत् ॥ २३२ ॥ प्रियंगुं सर्जिकां सिंधुं लेहयेन्मधुना सह ॥ क्षीरामयं निहंत्याशु विडंगेन युतं कृमीन् ॥ २३३ ॥ पीतंपीतं वमति यः स्तन्यं तं मधुसर्पिषा ॥ द्विवार्ताकीफलरसं लेहयेत्पंचकोलकम् ॥ २३४ ॥ तिक्तासिता क्षौद्रयुता लीढा हंति ज्वरं शिशोः ॥ तत्कल्केन पुनर्बालं मुहुर्लिंपेच्च बुद्धिमान् ॥ २३५ ॥ भद्रमुस्ताऽभयानिम्बपटोलम-

धुकैः कृतः ॥ क्वाथः कोष्णस्तु बालानामशेषज्वर-नाशनः ॥ २३६ ॥

## धूपः ।

पलंकषा वचा कुष्ठं गजचर्माऽविचर्म च ॥ निम्ब-पत्राणि माक्षीकं सर्पिर्युक्तं च धूपनम् ॥ २३७ ॥ ज्वर-वेगं निहंत्याशु बालानां च विशेषतः ॥ २३८ ॥

## अथ बालाऽतिसारः ।

बिल्वं च पुष्पाणि च धातुकीनां-जलं च लोध्रं गजपिप्पली च ॥ क्वाथाऽवलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ २३९ ॥ नागरातिविषामुस्त-वालुकेन्द्रजवैः कृतम् ॥ कुमारं पाययेत्क्वाथं सर्वा-ऽतीसारनाशनम् ॥ २४० ॥ समंगाधातुकीलोध्रसारि-बभिः शृतं जलम् ॥ दुर्द्धर्षेऽपि शिशोर्देयमतिसारे समाक्षिकम् ॥ २४१ ॥ घनकृष्णाऽरुणाशृंगीचूर्णं क्षौद्रेण योजितम् ॥ शिशोर्ज्वराऽतिसारघ्नं कासश्वासव-मीहरम् ॥२४२॥ फलिन्यंजनमुस्तानां चूर्णं पीतं समा-क्षिकम् ॥ तृष्णा छर्दिमतीसारं बालानामुद्धतं हरेत् ॥२४३॥ दाडिमस्य तु बीजानि जीरकं नागकेसरम् ॥ चूर्णं सशर्कराक्षौद्रं देयं तृष्णाविनाशनम्॥२४४॥ शृंगी-

१ तिनपत्तिया । २ हाथीका चाम । ३ मेंढीका चाम । ४ अतीश । ५ मालकांगनि । ६ सुर्मा ।

समुस्ताऽतिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशू-नाम् ॥ कासज्वरच्छर्दिभिरर्दितानां समाक्षिकां चाऽतिविषामथैषाम् ॥ २४५ ॥ व्याघ्रीकुसुमसंजातकेसरैरवलेहिका ॥ यांश्चापि चिरसंजाताञ्छिशोः कासान्व्यपोहति ॥ २४६ ॥ गुडोदकं वा क्वथितं व्योषसैंधवसंयुतम् ॥ सुखोष्णं पाययेद्बालं कासरोगोपशांतये ॥ २४७॥ हिंगुकर्कटके शृंगी गैरिकं मधुयष्टिका ॥ शुंठी क्षौद्रं नागरं च हिक्काश्वासविनाशनम् ॥ २४८ ॥ सुवर्णगैरिकस्यापि चूर्णानि मधुना सह ॥ लीढ्वा सुखमवाप्नोति क्षिप्रं कासार्दितं शिशुः ॥ २४९ ॥ विसर्पस्तु शिशोः प्राणनाशनो वस्तिशीर्षजः ॥ सारिवोत्पलकल्हारभद्रकोशीरचन्दनैः ॥ २५० ॥ प्रपौंडरीकमंजिष्ठायष्टीमधुकसर्षपैः ॥ कुमाराणां प्रशस्तोयं लेपो वीसर्पनाशनः ॥ २५१ ॥ मुखपाके तु बालानामाम्रसारमयोरजः ॥ गैरिकं क्षौद्रसंयुक्तं भेषजं सरसांजनम् ॥ २५२ ॥ शंखयष्ट्यांजनैर्लेपः शिशूनां गुदपाकनुत् ॥ २५३ ॥

## अथ पूतनाभिधानम्।

गृहेष्वधिपतिःस्कंदः सर्वरोगेषु रेवती ॥ पूजनीयौ सदा तस्माद्बालानां च हितेच्छया ॥२५४॥ स्वस्ति ते

---

१ ककड़ा। २ सोनेयेसा चमकीला गेरू।

षण्मुखः स्कन्दो महाभागा च रेवती ॥ दिशः सूर्योऽन्तरिक्षं च स्वस्ति कुर्वंतु सर्वदा ॥ २५५ ॥

## अथ बालकरक्षामंत्रः ।

तेजसा ब्रह्मणश्चाथ विष्णोरिंद्रस्य तेजसा ॥ सिद्धानां तेजसा चैव रक्षितोसि सुखी भव ॥ २५६ ॥ मंत्रैरेतैर्भिषक्पश्चाद्रक्षां कुर्वीत बालके ॥ भवंति निग्रहा बालाः सुखिनो रोगवर्जिताः ॥ २५७ ॥

## अथ विषचिकित्सा ॥

स्थावरं जंगमं चेति द्विविधं विषमुच्यते ॥ स्थावरं कन्दमूलादि सर्पलूतादि जंगमम् ॥२५८॥आद्ये ज्वरश्वासवमिप्रदाहा मूर्छाऽरुचिः कंठनिरोधहिक्के॥ स्युर्जंगमे दाहसलोमहर्षप्रसेकरोमोद्गमशोफतंद्राः ॥ २५९ ॥ विषदंश्यविशुष्काऽस्यो विलक्षो वीक्षते दिशः ॥ स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जंभति ॥ २६० ॥ विषभुक्तवते दद्यादूर्ध्वं चाधश्च शोधनम् ॥ काले सूक्ष्मं ताम्ररजो मधुना हृदि शोधनम् ॥२६१॥ शुद्धे हृदि हेमदलशाणं समधु दापयेत् ॥ न सज्जते हेमपात्रे पद्मपत्रेंबुवद्विषम् ॥ २६२ ॥ जायते विपुलं चायुर्गरेप्येवं विधिः स्मृतः ॥ उष्णवर्ज्यो विधिः कार्यो विषार्तानां

---

१ पसेव । २ कांपना । ३ डरपा । ४ हैमदल, वर्क । ५ गर विष ।

विजानता ॥ २६३ ॥ मुक्ता कीटविषं तद्धि शीतेना-ऽति प्रवर्तते ॥ दिवा स्वप्नं व्यवायं च व्यायामं क्रोध-मागतम् ॥ २६४ ॥ सुरातिलकुलत्थाँश्च वर्जयेद्विष-वान्नरः ॥ शालयः षष्टिकाश्चैव कोरदूषाः प्रियंगवः ॥ २६५॥ भोजनार्थे प्रशस्यंते लवणं चैव सैन्धवम् ॥ तंडुलीयकजीवन्तीवार्ताकँ सुनिषण्णकम् ॥ २६६ ॥ शस्यते सर्वदा शाकमम्लार्थे धात्रिदाडिमम् ॥ शिरीष-पत्रस्वरसे सप्ताहं भावयेत्सितम् ॥ २६७ ॥ मरिचं सर्पदष्टानां नस्यं वा चांजने हितम् ॥ गृहधूमं हरिद्रे द्वे समूलं तंडुलीयकम् ॥ २६८ ॥ अपि वासुकिना दष्टः पिबेद्दधि घृतप्लुतम् ॥ वटशृंगाणि मंजिष्ठा जीव-कर्षभकौ बला ॥ काश्मर्य मधुकं चेति पानं सर्पविषे हितम् ॥ २६९ ॥

## अथ वृषादिघृतम् ।

वृषनिम्बपटोलानां क्वाथेन विपचेद्घृतम् ॥ अभ-यागर्भितं श्रेष्ठं तद्गरस्य निबर्हणम् ॥ २७० ॥

## अथ सर्पविषहरमंत्रः ।

नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ॥ नमस्ते नर्मदे तुभ्यं रक्ष मां विषसर्पतः ॥ २७१ ॥ इति विष्णु-पुराणोक्तम् ॥

---

१ अगियाकीडा । २ चौराईशाग । ३ पोई या कुल्फा । ४ मांटा । ५ सुसुनाशाग । ६ साँपका विष ।

## लूताविषम् ।

निशाद्वयं समंगा च पतंगं नागकेसरम् ॥ शीताम्बु-पेष्यमालेपात्सद्यो लूतां विनाशयेत् ॥ २७२ ॥

### पुनः ।

चन्दनं पद्मकं कुष्ठमनंतोशीरपाटलाः ॥ निर्गुंडी सारिवा शेलुर्लूताविषहरो गणः ॥ २७३ ॥

## मूषकविषम् ।

शिरीषकस्य मूलं वा वत्समूत्रेण पेषितम् ॥ पान-लेपनयोरुक्तं सर्वाऽखुविषनाशनम् ॥ २७४ ॥ विशालां कोलमूलं च तिलमूलं सिता मधु ॥ घृतेनाखुविषं हंति पीतमात्रं च दुस्तरम् ॥ २७५ ॥

## श्वानविषम् ।

अंकोल्लककषायस्य द्विपलं सर्पिषः पलम् ॥ पीत-मात्रं निहंत्येतच्छ्वानस्य गरलं हरेत् ॥ २७६ ॥

### पुनः ।

जलवेतसपत्रं च मूलं पिष्ट्वा पचेद् ध्रुवम् ॥ स क्वाथः शीतलः पेयः परं श्वविषनाशनः ॥ २७७ ॥

---

१ वकमकाठ । २ व्हटोरा, शिपिस्ता । ३ माहारि । ४ झर्वैरा ।

## वृश्चिकविषम्।

सद्यो वृश्चिकजं दंशं तक्रतैलेन सेचयेत् ॥ लवणो-त्तमयुक्तेन सर्पिषा वा पुनःपुनः ॥ २७८ ॥ सिंचेत्को-ष्णारनालेन सक्षारलवणेन वा ॥ सघृतं सैंधवं पीतं हंति वृश्चिकजं विषम् ॥ २७९ ॥

## पुनः।

जीरकस्य कृतः कल्को घृतसैंधवसंयुतः ॥ सुखोष्णो वृश्चिकार्तानां प्रलेपो मधुना हितः ॥ २८० ॥

## नखदंतविषम्।

रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ तथ दन्तमुखे सद्यो नरमूत्रेण सेचनम् ॥ २८१ ॥ कीटदंश क्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥

## जलौकाविषम्।

शिरीषकर्टभीपार्थशेलुक्षीरीद्रुमत्वचः ॥ २८२ ॥ विषं जलौकसां हंति प्रयुक्ताः पानलेपयोः ॥ २८३ ॥

## सर्वकीटविषम्।

वचाहिंगुविडंगानि सैंधवं गजपिप्पली ॥ पाठा प्रतिविषा व्योषं दशांगं पानलेपतः ॥ २८४ ॥ सर्व-

---

१ कांजी। २ कटभी, रूपमंजरी, विष्णुक्रांता। ३ अर्जुनवृक्ष। ४ लिसोडा।

कीटविषं हंति काश्यपेन विनिर्मितः ॥ २८५ ॥ विरुद्धाऽध्यशनक्रोधक्षुत्तृष्णायासमैथुनम् ॥ वर्जयेद्विषमुक्तो हि दिवास्वप्नं विशेषतः ॥ २८६ ॥ तुषांबुना मेघरवस्य मूलं पिष्ट्वा पिबेच्छर्करया समेतम् ॥ तच्छंखपुष्पीप्रभवं जलं तु धत्तूरबीजोत्थमदे सदैव ॥ २८७ ॥

इति श्रीगौडवंशावतंसश्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे कर्णनासाप्रतिश्यायनेत्रबालविषरोगनिदानचिकित्साकथनं नाम पंचदशोल्लासः ॥ १५ ॥

## अथ जलविकारौषधम्।

भोजनादौ तु संभुक्तं शुंठ्याजाज्यभयोत्थितम् ॥ चूर्णं निहंति रोगांश्च नानादेशजलोद्भवान् ॥ १ ॥ महौषधयवक्षारौ पीत्वा चैवोष्णवारिणा ॥ नानादेशोद्भवजललग्नं दोषं निवारयेत् ॥ २ ॥ यो लेढि शयनसमये मधुमिश्रं बीजपूरदलचूर्णम् ॥ स पीडाकरवातप्रसरनिरोधात्सुखं स्वपिति ॥ ३ ॥ वृष्यादियोगमारभ्य योग्याऽयोग्यग्रहावधि ॥ ग्रंथान्तरेभ्यः

१ शंखपुष्पी, सुसुनाशागकी भांति एक जलसमीलप बूटीहै जिसका फर फूल चित्र येसा होताहैं वो वृक्ष सुसुनाशागकी भांति जानना। २ खावे।

संगृह्य लिख्यते बहुधा मया ॥ ४ ॥ युवा वाप्यथवा वृद्धो विषयाऽसक्तमानसः ॥ हीनकामो निषेवेत वाजीकरणमन्वहम्॥५॥यथा वाजी मदोन्मत्तो धावते वडवाशतम् ॥ तथा नारीं नरस्तेन वाजीकरणमुत्तमम् ॥६॥ धात्रीफलं च स्वरसैर्भावितं सप्तवारतः॥ लिहन्नाऽमलकं चूर्णं धात्रीमधुसितायुतम् ॥ ७ ॥ मासेनैकेन वृद्धोपि युवा स्याद्दुग्धपानतः॥ विदारीकन्दचूर्णं वा पूर्ववद्गुणवर्द्धनम् ॥८॥ वाजिगन्धां प्रभाते यः सितामधुघृतप्लुताम्॥ पलप्रमाणां संगृह्य मासात्स्यात्स्थविरो युवा॥९॥ विडंगाऽसनधात्रीणां चूर्णं लोहरजो मधु ॥ एतत्संप्राश्य वृद्धोपि तारुण्यमधिगच्छति ॥ १० ॥ वृद्धदारुकचूर्णं तु यो लिहेन्मधुसर्पिषा ॥ सप्ताहात्क्षीरयूषाशी किन्नरैः सह गीयते ॥ ११ ॥ हस्तिकर्णरजः खादेत्प्रातरुत्थाय सर्पिषा॥यथेष्टाऽऽहारगो वापि सहस्रायुर्नरो भवेत्॥१२॥ मेधावी बलवान्कामी स्त्रीशतानि व्रजत्यसौ ॥ अश्वगंधा वृद्धदारु समभागं विचूर्णयेत् ॥ १३ ॥ स्थापयित्वा घटे स्निग्धे वर्षमेकं तु भक्षयेत् ॥ दुग्धेन प्रातरुत्थाय भवेद्दोषविवर्जितः ॥ १४ ॥ चतुर्मासोपयोगेन वलीपलितवर्जितः ॥ १५ ॥ ग्रीष्मे

---

१ अथवृद्धा । २ खावे । ३ किन्नर, कुबेरका दूत । ४ मानकन्द, मानपातावृक्ष । ५ बुढापेसे शरीर गुलझट और शिरसपेदी ।

तुल्यगुडां सुसैंधवयुतां मेघावधावंबरे सार्द्धं शर्कया शरद्यमलया शुंठ्या तुषारागमे ॥ पिप्पल्या शिशिरे वसंतसमये क्षौद्रेण संयोजिता राजन्प्राप्य हरीतकीमिव गदा नश्यंति ते शत्रवः ॥ १६ ॥

## अथ जलयोगः ।

अंभसंश्चुलकानष्टौ प्रातरुत्थाय यः पिबेत् ॥ वातपित्तकफान्हंति जीवेद्वर्षशतं सुखी ॥ १७ ॥ निशाक्षये पिबेत्तोयं नासारंध्रेण यः पुमान् ॥ वलीपलितवैस्वर्य्यचक्षूरोगांश्च नाशयेत् ॥ १८ ॥ दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः ॥ ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ १९ ॥ कफे विदध्याद्वमनं संयोगे वा कफोल्वणे ॥ पित्ते विरेचनं देयं वाते वस्तिविधिर्हितः ॥२०॥ पूर्वाह्ने वमनं देयं मध्याह्ने तु विरेचनम् ॥ मध्याह्ने किंचिदावृत्ते वस्तिं दद्याद्विचक्षणः ॥ २१ ॥

## वमनम् ।

आटरूषवचानिंबपटोलफलिनीत्वचः ॥ क्वाथयित्वा पिबेत्तोयं वांतिकृन्मधुनाऽन्वितम् ॥ २२ ॥ आकण्ठं पायितम्मद्यं क्षीरमिक्षुरसं रसः ॥ ततो वचां कटूफलं च चूर्णं मुस्तेन वारिणा ॥ २३ ॥ पायये-ज्जातहृल्लासप्रसेकच्छर्दयेत्ततः ॥ अंगुलिभ्याम-

१ चिरभा ।

नास्यासं नालेन मधुनाऽथवा॥२४॥ पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत्॥ प्रदेयं वमनं तावद्भिषजा सिद्धिमिच्छता ॥ २५ ॥

## अथायोग्यवमनम् ।

तैमिरं गुल्मिनं पांडुं कृशं स्थूलं न वामयेत् ॥ वमने मदनं श्रेष्ठं त्रिवृच्चूर्णं विरेचने ॥ २६ ॥ मृदुकोष्ठः पयो द्राक्षा तुंबीतैलैर्विरच्यते ॥ मध्यकोष्ठस्त्रिवृत्तिक्ताराजवृक्षैर्विरच्यते ॥ २७ ॥ क्रूरस्नुहीपयो हेमक्षीरीदंतीफलादिभिः ॥ २८ ॥

## अथ विरेचनार्थे अभयादिमोदकः ।

पथ्या विडंगामलकत्रिजातं कटुत्रिकं पिप्पलिमूलमुस्ते ॥ एतत्समं स्यात्त्रिगुणा च दंती त्रिवृद्भवेदष्टगुणा सिता षट् ॥ २९ ॥ संचूर्ण्य सर्वं गुटिकां प्रकुर्यात्कर्षप्रमाणां मधुना च साकम् ॥ एका प्रभाते मनुजाय दद्याज्जलेन शीतेन विरेचनार्थम् ॥ ३० ॥ तावद्विरच्यते जंतुर्यावदुष्णं न सेवते ॥ विषमज्वरमंदाग्निपांडुकासभगंदरान् ॥ ३१ ॥ दुर्नामकुष्ठगुल्मांश्च नाशयेदभयाह्वया ॥ गुटिका चेति विख्याता रसायनवरा

१ अनामिकाअंगुरी । २ रेंडका पोंपी वा कमलकी डंडी । ३ मैनीफर । ४ सेहुडकादूधं ।५. चोख, मडमांडकीजड । ६ जमालगोटा बीज । ७ तज.। लायची, तेजपात, त्रिसुगंध है।

स्मृता ॥ ३२ ॥ पथ्यापिप्पलिकाचूर्णं सूक्ष्ममुष्णांबुना पिबेत् ॥ विरेकोऽयं सदा श्रेष्ठः सर्वदोषनिबर्हणः ॥ ३३ ॥ हरीतकी त्रिवृत्कर्षद्वयं शीतेन वारिणा ॥ पिष्ट्वा घृतेन संभर्ज्य कर्षैकां च सितां क्षिपेत् ॥ ३४ ॥ पीत्वा विरच्यते शीतजलैः संसिच्य चक्षुषी ॥ सुगंधि किंचिदाघ्राय तांबूलं शीलयेन्नरः ॥ ३५ ॥ सम्यग्विरच्यते जंतुः कोष्णनीरं पिबेदनु ॥ वृद्धदारुकचूर्णस्य कर्षं शुंठ्यार्द्धकर्षकम् ॥ ३६ ॥ गुडेन गुटिकां कृत्वा विरेकार्थं प्रयोजयेत् ॥ मेषशृंग्याश्च कर्षकं किंचित्सैंधवसंयुतम् ॥ ३७ ॥ उष्णांबुना पिबेद्रात्रौ प्रातः सुखविरेचनम् ॥ ३८ ॥

## अथ भानुरेचनीगुटिका।

रसं विषं गन्धतालं टंकणं दंतिबीजकम् ॥ त्रिकटु त्रिफला वह्निः समांशं भृङ्गजद्रवैः ॥३९॥ कुर्वीत मरिचाकारां गुटिकां भानुरेचनीम् ॥ ४० ॥

## विरेचनम्।

अष्टौ निस्तुषिदंतिबीजसकलाञ्छुंठ्यास्त्रयो गन्धकाद् द्वौ भागौ मरिचाच्च टंकणरसादेकैकभागं पुनः ॥ गुंजामात्रमिदं विरेचनकरं देयं च शीतांबुना गुल्माष्ठीलमहोदरापहरणं वातापहं दीपनम् ॥४१॥

---

१ अत्तर। २ पानबीडे। ३ मेढाशींगी, काकराशींगी।

प्रभातसेवां शीतांबुस्नेहाभ्यंगमजीर्णताम् ॥ व्यायामं मैथुनं निद्रां न सेवेत विरेचितः ॥४२॥ जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ ॥ दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा स्याद्द्विचतुर्गुणाश्च ॥ ४३ ॥

अथौषधिसंज्ञाः ।

## अथाऽनुलोमनौषधिः ।

(१) कृत्वा पाकं मलानां यद्भीत्या बन्धवधो नयेत् ॥ तच्चाऽनुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी ॥ ४४ ॥

## स्रंसनम् ।

( २ ) श्लिष्टकोष्ठे मलमधो नयति स्रंसनं तु तत् ॥

## भेदनम् ।

(३) बद्धाऽबद्धमलान्भित्त्वा पाययेद्भेदनं च तत्॥४५॥

## शोधनम् ।

( ४ ) पक्वाऽपक्वमलं चाधो द्रवता तद्विरेचनम् ॥ स्थानादूर्ध्वमधो बाह्यं नयेद्वा मलसंचयम् ॥ ४६ ॥ शोधनं तद्धि विज्ञेयं देवदालीफलं यथा ॥

## छेदनम् ।

( ५ ) मलानुन्मूलयेच्छ्लिष्टान्बलात्तच्छेदनं स्मृतम् ॥ ४७ ॥

---

१ अन्त· पीछे । २ बीच । ३ औषधीके गुणकी संज्ञा कहतेहैं ।

## लेखनम् ।

(६)विशोष्योल्लेखयेद्धातून्मलान्वातद्धि लेखनम्॥४८॥

## रसायनम् ।

( ७ ) ग्राहि स्मृतं दीपनं यत्पाचनं द्रव्यशोषकम्॥ यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ ४९ ॥

## सूक्ष्मम् ।

( ८ ) देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत्सूक्ष्ममुच्यते ॥

## विकासि ।

( ९ ) पाकं यात्यखिलं देहं व्याप्य यत्तद्व्यवायि च ॥ ५० ॥ संधिबंधांस्तु शिथिलान्यत्करोति विकासि तत् ॥

## मदकारि ।

( १० ) बुद्धिं लुंपति[1] यद्द्रव्यं मदकारि तदुच्यते ॥ ५१ ॥

## प्रमाथि ।

( ११ ) निरस्यति बहिर्दोषान्स्ववीर्येण प्रमाथितत् ॥

## अभिष्यंदि ।

(१२) पैच्छिल्याद्गौरवाद्द्रव्यं रुद्ध्वा रसवहाः शिराः॥ धत्ते यद्गौरवं देहे तदभिष्यंदि कथ्यते ॥ ५२ ॥

---

१ लुंसकरनेवाली, बुद्धि हरनेवाली ।

## वाजीकरम्।

(१३) स्त्रीषु हर्षो भवेद्यस्माद्द्रव्याद्वाजीकरं च तत् ॥ ९३ ॥

## शुक्रवर्द्धकम्।

(१४) सूक्ष्मं छिद्रं विशेद्द्रव्यं शुक्रलं शुक्रवर्द्धनम् ॥ ९४ ॥

## अथ क्वाथप्रकारः।

स्वरसः क्वाथकल्कौ च तथा च हिमफांटकौ ॥ कषायाः पंच विज्ञेया लघवः स्युर्यथोत्तरम् ॥ ९५ ॥ आर्द्रद्रव्यसमुत्पन्नो रसो यः स्वरसो मतः ॥ आदाय शुष्कद्रव्यं वा स्वरसानामसंभवे ॥ ९६ ॥ जलेऽष्टगुणिते साध्यं पादशेषं तु गृह्यते॥ स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत् ॥ ९७ ॥ निःशेषितं चाग्निसिद्धं पलमात्रं प्रयोजयेत् ॥ सितामधुगुडक्षाराञ्जीरक लवणं तथा ॥९८॥ घृतं तैलं च चूर्णादीन्कोलमात्रं रसे क्षिपेत् ॥ द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् ॥९९॥कल्कः स एव विज्ञेयस्तन्मानं कर्षसम्मितम् ॥ कल्के मधुघृतं तैलं देयं द्विगुणमात्रया ॥ १०० ॥ सिता गुडं समं दद्याद्द्रवो देयश्चतुर्गुणः ॥ पानीयं षोडशगुणं

१ एकतोळाभर ।

क्षुण्णं द्रव्यं पलं क्षिपेत् ॥ ६१ ॥ मृत्पात्रे क्वाथयेद्रा-ह्यमष्टमांशावशेषितम् ॥ तज्जलं पाययेद्धीमान्क्वाथो मृद्वग्निसाधितः ॥ ६२ ॥ शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥ वृद्धवैद्योपदेशेन पिबेत्क्वाथं पलं द्वयम् ॥ ६३ ॥ जीरकं गुग्गुलुं क्षारं लवणं च शिला-जतु ॥ हिंगु त्रिकटुकं चैव क्वाथे शाणोन्मितं क्षिपेत् ॥ ६४ ॥ क्षीरं घृतं गुडं तैलं मूत्रं चान्यद्रवं तथा ॥ कल्कं चूर्णादिकं क्वाथे निक्षिपेत्कर्षसंमितम् ॥ ६५ ॥ क्षिपेन्मधुसितामंशैश्चतुर्थाष्टमषोडशैः ॥ क्षुण्णद्रव्यपलं सम्यक्षड्भिर्नीरपरिप्लुतम् ॥ निःशोषितं हिमं तत्स्या-त्तन्मानं च पलद्वयम् ॥ ६६ ॥ क्षुण्णे द्रव्यपले सम्य-ग्जलमुष्णं विनिक्षिपेत् ॥६७ ॥ मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् ॥ तस्याश्चूर्णद्रवः फांटस्तन्मानं द्विपलोन्मितम् ॥ ६८ ॥ सितामधुगुडादींस्तु क्वाथव-त्तत्र निःक्षिपेत् ॥ पुटपाकस्य कल्कस्य स्वरसो द्विप-लः स्मृतः ॥ ६९ ॥ सम्यक्पिष्टस्य कल्कस्य चतुःपल-मितस्य च॥विधाय गोलं संवेऽष्टय वटजम्ब्वादिपत्रकैः ॥ ७० ॥ मृदा लेपं भिषक्पश्चात्कुर्याच्चांगुष्ठमात्रकम् ॥ आतपे शुष्कमादाय दहेत्तं गोमयाऽग्निना ॥ ७१ ॥ अंगारवर्णकं दृष्ट्वा ततो वह्नेः समुद्धरेत् ॥ वस्त्रनिष्पी-

---

१ मेहीदवा, कपडछान ।

डितस्तस्माद्रसो ग्राह्यो मनीषिभिः॥७२॥ कल्कचूर्णद्रवाद्यास्तु देयाः स्वरसवद्बुधैः ॥ पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता ॥ ७३ ॥

## अथ यवागूः ।

यवागूष्षड्गुणजले सिद्धा स्यात्कृशरा घना ॥ तंडुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता ॥ ७४ ॥ विलेपी घनसिक्थां स्यात्सिद्धा नीरे चतुर्गुणे ॥ चतुर्दशगुणे नीरे सिद्धा पेया द्रवाऽधिका ॥ ७५ ॥ यूषः किंचिद्घनो ज्ञेयो द्रवो मंडस्त्वसिक्थकः ॥ धान्यत्रिकटुसीधूत्थयुक्तो मुद्गेन संयुतः॥७६॥ भृष्टश्च हिंगुतैलाभ्यां स मंडोऽष्टगुणः स्मृतः ॥ जले चतुर्दशगुणे तंडुलानां चतुःपलम् ॥ ७७ ॥ विपाचयेन्मंडभक्तो मधुरो लघु संस्मृतः ॥ ७८॥ शुष्कं द्रव्यं सुपिष्टं यच्चूर्णं स्याद्वस्त्रगालितम् ॥ चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत् ॥ ७९ ॥ पिबेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ॥ यथा तैलं जले प्राप्तं क्षणेनैव प्रसर्पति ॥ ८० ॥ अनुपानबलादंगे तथा सर्पति भेषजम् ॥ क्राथादेर्यत्पुनः पाकाद्घनत्वं सा रसक्रिया ॥ ८१ ॥ सोऽवलेहश्च

१ खिचडी । २ माड, पसावन । ३ माड, पीच । ४ भात, अन्न । ५ चीनी।

लेहश्च तन्मात्रा स्यात्पलोन्मिता ॥ सिता चतुर्गुणा कार्या चूर्णाच्च द्विगुणो गुडः ॥ ८२ ॥ द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ॥ लेहस्य तंतुमत्त्राशु मज्जनं सरणं न च ॥ ८३ ॥ घृतस्य फेनोपशमस्तैलस्य च तदुद्भवः ॥ नाग्नौ क्षिप्तं सशब्दं स्यात्कल्को वर्तिवमाप्नुयात् ॥ ८४ ॥ एवं सम्यग्भिषग्विद्यात्पाकं तु घृततैलयोः ॥ स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यखरै-स्तथा ॥ ८५ ॥ नस्यार्थं स्यान्मृदुः पाको मध्यमस्सर्वकर्मसु ॥ अभ्यंगार्थे खरः प्रोक्तो युंज्यादेव यथोचितम् ॥ ८६ ॥ घृततैलगुडादींस्तु साधयेन्नैव वासरे ॥ दग्धः पाको दाहकृत्स्यादामपाकेऽग्निमांद्यकृत् ॥८७॥ कल्काच्चतुर्गुणः स्नेहः स्नेहात्क्वाथश्चतुर्गुणः ॥ दुग्धे दधिरसे तक्रे कल्को देयोऽष्टमांशकः ॥ ८८ ॥ कल्कहीनश्च यः स्नेहस्स साध्यः केवले द्रवे ॥ ८९ ॥

## अथ वस्तिविधानम् ।

द्विधा वस्तिः परिज्ञेयो निरूहश्चानुवासनः ॥ तैलक्षीरकषायैर्यो निरूहः सो हि कथ्यते ॥ ९० ॥ स्नेहै-

---

१ मोलायम, कोमल । २ कठोर, कडा, बिचलीरास । ३ अतिकडा, खर, तेज ।

र्यो दीयते यस्मादनुवासनसंज्ञितः ॥ बस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः ॥ ९१ ॥ पूर्वबस्तिर्निरूहाख्यस्ततः स्यादुत्तराभिधः ॥ अनुवासनभेदश्च मात्राबस्तिरुदीरितः ॥ ९२ ॥ मात्रा पलद्वयं तस्य तस्मादर्द्धापि वा भवेत् ॥ आस्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः ॥ ९३ ॥ घृताभ्यक्ते गुदे क्षेप्याः श्लक्ष्णाः सांगुष्ठसन्निभाः ॥ मलप्रवृत्तिर्विफलं फलवर्तिश्च सा मृता ॥ ९४ ॥ नासायामौषधं दत्तं नस्यं तत्कथ्यते बुधैः ॥ द्विविधं प्रोच्यते नस्यं रेचनं स्नेहनं तथा ॥ ९५ ॥ रेचनं कर्षणं ज्ञेयं स्नेहनं बृंहणं मतम् ॥ कफपित्तानिलोद्रेके पूर्वमध्यापराह्णिके ॥९६॥ रेचनं तीक्ष्णभैषज्यसिद्धैः स्नेहैस्तथा रसैः॥ नासिकारंध्रयोरष्टौ षट्चत्वारि द्विबिंदवः ॥९७॥ प्रत्येकं रेचने योज्या मुख्यमध्या तु मात्रया ॥ अवपीड्य प्रधमनं द्वौ भेदौ च परौ स्मृतौ ॥ ९८ ॥ निष्पीडितस्तीक्ष्णद्रव्याद्रसो यः सोवपीडकः ॥ तीक्ष्णचूर्णं धमेद्वक्रवातैः प्रधमनं हि तत् ॥९९॥ अत्यंतोत्कटदोषेषु विसंज्ञेषु च दीयते ॥ क्रुद्धजत्रुगते रोगे रेचनं स्वरसं क्षये ॥ १०० ॥

---

१ चूतडमें पिचकारीदेना। २ नस्य, नाश। ३ मलझरानेवाली। ४ तेल डालनेवाली। ५ मुखसे वायुभरके फूंकदेना।

नस्यं स्याद्गुडशुंठीभ्यां पिप्पल्या सैंधवेन च ॥
शममायांति कर्णनासाशिरोगदाः ॥ १०१ ॥ अर्श
प्रतिमर्शश्च द्वौ भेदौ स्नेहनौ मतौ ॥ मर्सस्यर्पर्ण
मात्रा श्रुष्या शाणैस्स्मृताष्टभिः ॥ १०२ ॥ मध्यमा
चतुःशाणैर्हीना शाणद्वयोन्मिता ॥
मात्रेयं देया नासापुटे बुधैः ॥ १०३ ॥ प्रतिम
मात्रा तु बिंदुद्वयसमायुता ॥ स्नेहे पर्वद्वयं सम्यक्त
र्जन्या चोद्धृतं ततः ॥ १०४ ॥ स वै
सा ज्ञेया मात्रेयं बिंदुसंमिता ॥ एवं बिन्दुभिरष्टा
भिः शाणो निगदितो बुधैः ॥ १०५ ॥ एको
नस्यमर्शे प्रतिमर्शे द्विबिंदुकः ॥ प्रभाते दंत
सायं वा नस्यमाचरेत् ॥ १०६ ॥
वस्त्राच्छादितास्यं सुनिश्चलम् ॥ समुन्नमितनासाग्रवे
नस्येन योजयेत् ॥ १०७ ॥ पंच सप्त दशैव स्युर्मान
वा नस्यधारणे ॥ वामदक्षिणपार्श्वाभ्यां निष्ठीवे
त्सम्मुखं नहि ॥१०८॥ नस्यांते वाग्यतस्तिष्ठेत्प्रोक्ता
नस्त्यक्तनिद्रकः ॥ १०९ ॥

## धूमः ।

जत्रूद्ध्वकफवातोत्थविकाराणामजन्मने ॥

---

१ शाण ( ४ ) माषका होताहै । २ गांठ ।

दाय च जातानां पिबेद्धूमं सदात्मवान् ॥ ११० ॥ स्निग्धो मध्यः सतीक्ष्णश्च वाते वातकफे कफे ॥ न योज्यो मेहतिमिरे रक्तपित्तोदरेषु च ॥ १११ ॥ धूमो-कालेऽतिपीतो वा तत्र शीतो विधिर्हितः ॥ सुखेनैवो-द्वमेद्धूमं नासायां तद्विघातकृत् ॥ ११२ ॥ स्निग्धे धूमे प्रयोज्यानि द्रव्याण्यगुरुगुग्गुलुः ॥ मुस्तास्थौ-णेयशैलेयनलदोशीरवालुकम् ॥ ११३ ॥ वरी सकौंती मधुकं बिल्वमज्जैलवालुकम् ॥ श्रीवेष्टकं सर्जरसो ध्यामकं मदनप्लवम् ॥ ११४ ॥ शल्लकी कुंकुमं मा-षा यवाः कुंदुरुकं तिलाः ॥ स्नेहं फलानां साराणां मेदो मज्जा वसा घृतम् ॥ ११५ ॥ शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ॥ न्यग्रोधोदुम्बराऽश्वत्थ-प्लक्षरोध्रत्वचः सिता ॥ ११६ ॥ तीक्ष्णो ज्योतिष्मती-कुष्ठगन्धाऽश्मतगरं निशा ॥ गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ ११७ ॥ सरावसंपुटच्छिद्रे नाडीं तस्य दशांगुलाम् ॥ अष्टांगुलां वा वक्रेण कासवान्धूम-मापिबेत् ॥ ११८ ॥ कासः श्वासः पीनसो विस्वरत्वं

---

१ हुक्का । २ गठिवनवृक्ष । ३ वालुकं, एलुआ, मुसब्बर । ४ ध्यामक, रोहिस, सोंधियावृक्ष, जलसमीपी वृक्षहै । ५ शलईवृक्ष, कटाय, शल्लकी । ६ कुन्दुरुगोंद, रूमीमतागी । ७ मेद, वसा, चिकनीचर्बी । ८ मज्जा, हड्के भीतरका मांस।

पूतिर्गन्धः पांडुता केशदोषाः ॥ कर्णास्याक्षिस्रावजिह्वाऽर्तिकंडूनिद्रातंद्रा धूमपो न स्पृशन्ति ॥ ११९ ॥

## अथ गंडूषविधिः ।

चतुःप्रकारो गंडूषः स्निग्धः शमनशोधनः ॥ रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १२० ॥ अन्यो व्रणघ्नः स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ॥ स्नेहैः संशमनस्तिक्तकषायमधुरौषधैः ॥ १२१ ॥ शोधनं तिक्तकट्वम्लैः कट्वम्ले रोपणं पुनः ॥ कषायतिक्तकैस्तत्र स्नेहः क्षीरमधूदकम् ॥ १२२ ॥ सूक्तं मद्यं रसो मूत्रं धान्याऽम्लं च प्रयोजयेत् ॥ दंतहर्षे दंतचाले मुखरोगे च वातिके ॥ १२३ ॥ सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ गंडूषधारणे नित्यं तैलं मांसरसोऽथवा ॥१२४॥ मुखे क्षाराग्निदग्धे च हितं सर्पिः पयोऽथवा ॥ धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ॥ १२५ ॥ तदेव लवणं शीतं मुखशोषहरं परम् ॥ गंडूषमुन्नतः किंचिदुन्नतास्यो विधारयेत् ॥ १२६ ॥ कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षिता तथा ॥ असं-

---

१ गंडूष, कुल्ला, गरारा ।

चार्यो मुखे पूर्णे गंडूषकवलोन्यथा ॥ १२७ ॥ मन्या-शिरःकर्णमुखाक्षिरोगाः प्रसेककंठाऽमयवक्त्रशोषाः ॥ हृल्लासतंद्रारुचिपीनसाश्च साध्या विशेषात्कवलग्रहेण ॥ १२८ ॥

## अथ मानपरिभाषा ।

यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ॥ यवद्वयेन गुंजा स्यात्त्रिगुंजो वल्ल उच्यते ॥ १२९ ॥ माषो गुंजाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् ॥ स्याच्चतुर्माषकैश्शाणः स निष्कं टंक एव च ॥ १३० ॥ गद्याणो माषकैः षड्भिः कर्षस्तु दशमाषकः ॥ अक्षः पिचुः पाणितलं बिडालपदकं तथा ॥ १३१ ॥ सुवर्णहंसपदकं पर्यायैः कर्ष उच्यते ॥ कर्षाभ्यां शुक्तिरादिष्टा शुक्तिभ्यां पलमीरितम् ॥ १३२ ॥ पलाभ्यां प्रसृतिर्ज्ञेयो प्रसृतिभ्यां तथांजलिः ॥ अंजलिभ्यां शरावः स्यात्कुडवोऽर्द्धशरावकः ॥ १३३ ॥ शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकम्॥भाजनं कांसपात्रं च चतुःषष्टिपलश्च सः ॥ १३४ ॥

---

१ गलेकी पिछिली नश ॥ २ हिचकी ।

चतुर्भिराढकैर्द्रोणः कलशो नल्वणोर्मणः ॥ घटो राशिश्च पर्याया इत्येते द्रोणवाचकाः ॥१३५॥ द्रोणाभ्यां सूर्प्यकुंभौ च सूर्याभ्यां द्रोणिका मता ॥ द्रोणीचतुष्टयं खारी कथिता कोविदोत्तमैः ॥ १३६ ॥ पलाभ्यां द्विसंहस्रं तु सर्वत्रैष विनिश्चयः ॥ माषटंकाक्षबिल्वानि कुडवः प्रस्थमाढकम् ॥ १३७ ॥ राशिर्द्रोणीखारिकेति यथोत्तरचतुर्गुणाः ॥

## अथ मिश्रौषधिः ।

त्रिफला कथिता धात्रीपथ्याक्षैः सर्वरोगहृत् ॥१३८॥ रसायनवरा स्नेहविषमज्वरनाशिनी ॥ मधुसर्पिर्युता रात्रौ लीढा नेत्रे विकारनुत् ॥ १३९ ॥ शुंठीकणामरीचैश्च त्रिकटुव्योषमुच्यते॥ पिप्पलीपिप्पलीमूलं चव्यचित्रकनागरैः ॥ १४० ॥ पंचकोलमिदं प्रोक्तं मरिचेन षडूषणम् ॥ पंचकोलं रुचिकरं दीपनं पाचनं स्मृतम् ॥१४१ ॥ स्वर्जिका यावशूकश्च क्षारयुग्ममुदाहृतम् ॥ पलाससमार्कवतिलक्षारैः स्यात्क्षारपंचकम् ॥ १४२ ॥ सशिग्रुमुस्तकक्षारैर्ज्ञातव्यं क्षारसप्तकम् ॥ टंकणक्षारयुक्तैस्तैः क्षाराष्टकमुदाहृतम् ॥ १४३ ॥ सिंधुसौवर्चलबिडं सामुद्रं काचजं तथा ॥ एक द्वित्रिचतुःपंचलवणानि विदुः क्रमात् ॥ १४४ ॥ एलावरांगपत्रैश्च

त्रिसुगन्धिस्त्रिजातकम् ॥ नागकेसरसंयुक्तं चातुर्जात-मिदं स्मृतम् ॥ १४५ ॥ पंचागं वा तरोः पुष्पफलत्व-ङ्मूलपत्रकैः ॥ दशांगं सारनिर्यासशाखावृंतांघ्रिवा-रिभिः ॥ १४६ ॥ आम्रजंबूबीजपूरकपित्थं बिल्वजानि च ॥ गंधकर्माणि सर्वत्र पत्राणि पंचपल्लवम ॥ १४७ ॥ पंचनिम्बं निंबपत्रफलत्वङ्मूलपुष्पकैः ॥ त्रिकार्षिकं विषा शुंठी मुस्ताश्च परिकीर्तितम् ॥ १४८ ॥ गुडूच्या सहितं चैव चातुर्भद्रमुदाहृतम् ॥ मधुसर्पिर्गुडैर्युक्तं प्रोक्तं त्रिमधुकं बुधैः ॥१४९॥ पंचगव्यं गवां मूत्रदधिक्षीरसकृद्घृतैः ॥ पंचलोहं रूप्यताम्रलोहत्रपुसशीसकैः ॥१५०॥ सुवर्णरीतिकांस्यैस्तु युक्तं लोहाष्टकं स्मृतम् ॥ मनश्शिलासुरामांसीसठीचंदनकुष्ठकैः॥१५१॥वरांगनखैशैलेयैः सर्वौषधिकमुच्यते॥ काकोली क्षीरकाकोली द्वे मेदे जीवकर्षभौ॥१५२॥ऋद्धिवृद्धियुतश्चापि ज्ञेयश्चाष्टकवर्गकः॥ जीवंतिकासमायुक्तो जीवनीयो गणःस्मृतः ॥ १५३ ॥ चिंचादाडिमवृक्षाम्लकपित्थैश्चतुरम्लकैः ॥ बीजपूरकसंयुक्तं पंचाम्लं परिकीर्तितम् ॥ १५४ ॥ अश्वत्थोदुंबरप्लक्षन्यग्रोधाश्च सवेतसाः ॥ पंचैते क्षीरिणो वृक्षा त्वगेषां पंचपल्लवम् ॥ १५५ ॥ सक्तवः सर्पिषाऽभ्यक्ताः

---

१ तज, तेजपात, दालचीनी । २ नाखुनादवा । नखी ।

शीतवारिपरिप्लुताः ॥ नातिद्रवा नातिसांद्रा मंथ इत्यभिधीयते ॥ १५६ ॥ बिल्वकाश्मर्यतर्कारी पाटलाटिंटुकीमहत् ॥ ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ ॥ १५७॥ उभाभ्यां पंचमूलाभ्यां दशमूलमुदाहृतम् ॥ कासेश्वासे च तन्द्रायां सन्निपाते प्रशस्यते ॥१५८॥चतुर्गुणं मृदौ द्रव्ये कठिनेऽष्टगुणं जलम् ॥ कठिनात्कठिने देयं बुधैः षोडशिकं जलम् ॥१५९॥ सारश्च खदिरादीनां निम्बादीनां त्वचं तथा ॥ फलं तु दाडिमादीनां पटोलादेर्दलानि च ॥ १६० ॥ चूर्णे तु चूर्णद्विगुणा सिता चूर्णसमो गुडः ॥ मोदके च द्विगुणितो गुडः श्वेता चतुर्गुणा ॥१६१॥ रसा स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ षड्द्रव्यमाश्रितास्तेतु यथा पूर्वं बलावहाः ॥ १६२ ॥ तत्राद्या मारुतं घ्नंति त्रयस्तिक्तादयः कफम् ॥ कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते॥१६३॥ त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः॥ स्वादुः कटुश्च मधुरःकद्वम्लः पच्यते रसः ॥ १६४ ॥ तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ॥ १६५ ॥ गुरुमंदहिमस्निग्धश्लक्ष्णसांद्रमृदुस्थिराः ॥ गुणाः ससूक्ष्मविशदाः विंशतिः सविपर्ययाः ॥ १६६ ॥

## उत्क्लेदः ।

अन्नं यस्य न निर्गच्छेत्प्रसेकष्ठीवनं तथा ॥ हृदयं पीड्यते चापि तमुत्क्लेदं विनिर्दिशेत् ॥ १६७ ॥

## उपद्रवः ।

व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः ॥ उपक्रमविघाती च स ह्युपद्रव उच्यते ॥ १६८ ॥ भुक्ताऽभुक्ते तथा स्वप्ने यस्योद्गारोऽनिशं भवेत्॥ तमूर्ध्ववातं जानीयादुदानव्यापदुत्थितम् ॥ १६९ ॥ प्राणोदानौ समौ स्यातां मूर्ध्नि श्रोतः पथिस्थितौ॥नस्तः प्रवर्तते शब्दः क्षवथुं तां विनिर्दिशेत् ॥ १७० ॥ इन्द्रियार्थेष्वसंप्राप्तिगौरवं जृम्भणं क्रमः ॥ निद्रा तस्यैव यस्यैते नस्यं तन्द्रा विनिर्दिशेत् ॥ १७१ ॥ पीत्वैकमनिलोच्छ्वाससमुद्वेष्टच विवृताननः ॥ यो मुंचति स नेत्राश्रुः स जृंभ इति संज्ञितः ॥ १७२ ॥ येनायासः श्रमे देहे प्रवृद्धश्वासवर्जितः ॥ क्रमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥ १७३ ॥ सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता ॥ शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥१७४॥ वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः ॥ नैवान्नमभि-

---

१ छीक वा खांसी ।

कांक्षेत ग्लानिं तस्य विनिर्दिशेत् ॥१७५॥ आर्द्रचर्मावनद्धं च यो गात्रं मन्यते नरः॥ तथा गुरुशिरोऽत्यर्थं गौरवं तस्य निर्दिशेत ॥ १७६ ॥ मूर्च्छा पित्तत-मःप्राया रजःपित्तानिलाद्भ्रमः ॥ तमोवातकफात्तन्द्रा-निद्रा श्लेष्मतमोद्भवा ॥ १७७ ॥

इति संज्ञाप्रकरणम् ॥

## अथ द्रव्ययोजना ।

नवान्येव हि द्रव्याणि योज्यान्यखिलकर्मसु ॥ विना विडंगकृष्णाभ्यां गुडधान्याऽज्यमाक्षिकैः ॥ ॥ १७८ ॥ गुडूची कुटजो वासा कूष्मांडश्च शतावरी॥ अश्वगंधा सहचरी शतपुष्पा प्रसारणी ॥ १७९ ॥ प्रयोक्तव्या सदैवार्द्रा द्विगुणा नैव कारयेत् ॥ शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु ॥ १८० ॥ आर्द्रं च द्विगुणं युंज्यादेष सर्वत्र निश्चयः ॥ काले नोक्ते प्रभातं स्यादंगे नोक्ते जटा भवेत् ॥१८१॥ भागे नोक्ते च साम्यं स्यात्पात्रे नोक्ते च मृण्मयम् ॥ द्रव्ये नोक्ते जलं ग्राह्यं तैले नोक्ते तिलोद्भवम् ॥ १८२ ॥ पुनरुक्तं तु यद्द्रव्यं योगेन द्विगुणं भवेत् ॥ गुणहीनं भवेद्वर्षा-दूर्ध्वं तद्रूपमौषधम् ॥ १८३ ॥ मासाद्वयात्तथा चूर्णं हीनवीर्यत्वमाप्नुयात्॥ हीनत्वं गुटिकालेहौ लभेते वत्स-

रात्परम्॥१८४॥ पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ॥ व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तं त्यजेत् ॥ ॥ १८५ ॥ अनुक्तमपि युक्तं यद्योजयेत्तत्र तद्बुधः ॥ माजूफलं दंशफलं तदर्द्धं ह्रस्वचेतना ॥ १८६ ॥ तिलतैले पचेत्तावद्यावत्स्याद्यामरक्तता ॥ उद्धृत्य पीडयेद्गाढं रौक्षं स्याच्चात्रपर्पटे ॥ १८७ ॥

## अथ कृष्णरोमकरम्।

पलाऽर्द्धं नवसारस्य देयं कांज्यों तथैव च ॥ पलमानं ताम्रचूर्णं सर्वमेकत्र मर्दयेत् ॥१८८॥ धात्रीक्वाथेन तत्सूक्ष्मं कृत्वा पिंडान्प्रकल्पयेत् ॥ पिंडांशं लोहपात्रे तु धात्रीक्वाथेन मर्दयेत् ॥ १८९ ॥ याममात्रं तु संस्थाप्य पश्चात्केशान्विलेपयेत्॥दद्यादेरण्डपत्राणि बद्ध्वा यामंस्थितस्ततः॥१९०॥जलैः प्रक्षाल्य तैलेन मर्दयेच्च शनैः शनैः॥केशाश्चानेन जायंते षट्पदोदरसन्निभाः॥१९१॥ भट्टाऽनंतात्मजस्येयं शंकरस्य कृतिः सताम् ॥ आनंदयतु चित्तानि चिकित्सा सिद्धिदायिनी ॥ १९२ ॥ श्रीमद्भूपतिरामसिंहवचनाद्ग्रंथो मया निर्मितो यस्मिन्रोगविनिश्चयः प्रकथितो प्रोक्ता चिकित्सा क्रमात् ॥ योगो वृष्यतमो रसायनवरो संशोधनादिर्विधिर्वस्ति-

१ माजूफर। २ अंशफर, केरा, छिमी। ३ नशादर। ४ कांजी।

र्नावनधूमपानकवला व्योषादिसंज्ञास्तथा ॥ १९३ ॥
शशि १ वेदाऽ ४ द्रि ७ भू १ संख्यैर्युक्तेयं ( १७४१ )
संहिता शुभा ॥ श्लोकैर्वैद्यविनोदाख्या षोडशोल्लास-
निर्मिता ॥ १९४ ॥

इति श्रीमदनन्तभट्टात्मजशंकरभट्टविरचिते वैद्यविनोदे निदान-
चिकित्सावृष्यरसायनजलयोगवमनविरेचनानुलोमनादिभे-
दक्काथकल्पनादिलक्षणविलेपीमंडादिघृततैलविधानव-
स्तिनस्यधूमपानगंडूषविधिपारिभाषाव्योषत्रिफला-
पंचमूलादिसंज्ञारसविपाकवीर्यगुणोत्क्लेशादि-
लक्षणयुक्तायुक्तविचारकथनंनाम षोड-
शोल्लासः ॥ १६ ॥

समाप्तश्चायं ग्रंथः ।

# वैद्यकग्रन्थः।

## जाहिरात.

| नाम. | की० | डा० म० |
| --- | --- | --- |
| अनुपानदर्पण—भाषाटीकासमेत। इसमें—रस-धातु बनानेकी क्रिया और अनुपान देना तथा रोगोंपर औषधोंमें क्या २ अनुपान देना यह सब वर्णितहैं. ... ... ... ... | ॥।) | =) |
| अनुभूतयोगावली—चिकित्साग्रन्थ। इसमें अनुभव कीहुई हरेक रोगकी उत्तम उत्तम औषधियां वर्णितहैं ... ... ... | ।≡) | -) |
| अजीर्णतिमिरभास्कर—भाषामें—चौबे क्याम्बुय रामप्रसादकृत | ।=) | -) |
| अजीर्णमञ्जरी—भाषाटीकासहित। इसमें किन २ चीजोंका अजीर्ण किन २ चीजोंके सेवनसे दूर होताहै इत्यादि विषय भलीप्रकार लिखेहैं ... ... ... ... ... ... | ।) | )॥ |
| आयुर्वेदसुषेणसंहिता—भाषाटीकासहित। इसमें—सामान्य औषधीवर्ग, धान्यवर्ग, पयवर्ग इत्यादिकोंका गुण-दोष वर्णित है. ... ... ... ... ... ... ... | ॥=) | =) |
| आयुर्वेदचिन्तामणि—भाषाटीकासहित। पं० बलदेवप्रसाद मिश्र संगृहीत. ... ... ... ... ... ... | १॥।) | ।) |
| आरोग्यशिक्षा—पं० मुरलीधरशर्मा राजवैद्यसंकलित (भाषामें) | ।-) | )॥ |
| आदिशास्त्र—भाषाटीकासमेत। इस ग्रन्थमें कन्या और पुरुषका लक्षण कौन २ प्रकारसे विवाह करना और रोगोंकी दवा आदिका वर्णन भलीप्रकार है.... ... ... ... | ॥=) | -) |
| इलाजुल गुरबा—नूतन मथुराका छपाहै. ... ... ... | १) | ।) |
| औषधीक्रिया—मराठी भाषाटीकासमेत। "आर्यभिषक्पुस्तकावली" मेंसे यह स्वतन्त्र निकालागया है। आर्यवैद्यककी पद्धतिसे औषधोंको किसरीतिसे तैयार करना तथा कौनसे रोगपर किस दवाका उपयोग करना इत्यादि इस पुस्तकद्वारा सहजमें मालूम होसकाहै। मराठीभाषा जाननेवालोंको परमोपयोगीहै. ... ... ... ... ... | ।) | -) |
| अंजननिदान—भाषाटीकासमेत। इसमें—सुगमतासे रोगोंका निदान लिखाहै. ... ... ... ... ... ... | ।≡) | -) |

| नाम. | की० | डा० म० |
|---|---|---|
| **कल्पपञ्चकप्रयोग**–भाषाटीकासमेत । इस ग्रन्थमें चोपचीनी-कल्प, रुदवन्तीकल्प, रागदमनीयकल्प, शिवलिंगीकल्प, तथा पलाशकल्पात्मक भी हैं. ... ... ... ... ... | ≡) | )॥ |
| **करिकल्पलता**–छन्दोबद्ध–हिन्दीभाषामें । केशवसिंहजी तअल्लुकेदार रचित । इसमें–हाथियोंके शुभाशुभ लक्षण व उनके रोगनाशार्थ अनेक औषधिविधान चित्रोंसमेत वर्णितहै. ... | १) | =) |
| **कामकुतूहल**–भाषाटीकासमेत । इसमें–शरीरकी क्षीणतादिमें अपूर्व दवाइयोंका संग्रहहै. ... ... ... ... ... | ।) | )॥ |
| **कामरत्न**–योगेश्वर नित्यनाथप्रणीत और विद्यावारिधि पं० ज्वालाप्रसादजी मिश्रकृत भाषाटीकासमेत । इस ग्रन्थमें कामशास्त्रादि विषय और रोगोंकी औषधि तथा वाजीकरण औषधी अनुभूतहै और वशीकरणादि प्रयोगभी हैं. ... | १॥) | ≡) |
| **कालज्ञान**–भाषाटीकासमेत । इस ग्रन्थका संपूर्ण अभ्यास करनेसे भूत, भविष्य, वर्तमानका ज्ञान होताहै. ... ... | ≡) | )॥ |
| **क्याखूबडिबिया**–( जरांहीयोग ) चौबे क्याखूबजीकी बनाई हुई हमेशा पास रखने योग्यहै । देखनेसे मालूम होसकेगा. | ।) | )॥ |
| **कुमारतन्त्र**–रावणकृत मूल तथा भाषाटीकासमेत । इसमें–बालकोंकी दवाइयोंका अपूर्व वर्णन है. ... ... ... | ॥) | -) |
| **कूटमुद्गर**–सटीक–संस्कृत. ... ... ... ... ... | ≡) | )॥ |
| **कूटमुद्गर**–भाषाटीकासमेत. ... ... ... ... ... | ≡) | )॥ |
| **गुर्णोंकी पिटारी**–काशीनिवासी स्वामी परमानन्दने बड़े परिश्रमसे हिन्दीभाषामें बनाई है । इसमें–अनेक प्रकारकी धातुओंके फूँकने व सेवन करने व सिन्दूरादिके बनाने तथा साबुन, पारा, गन्धक और सिंगरफ वगैरहके बर्तनोंके बनानेके परमोपयोगी नानाप्रकारके तरीके भी लिखेगयेहैं. ... | ॥) | -) |